सिद्धा। वअस्स, तक्केमि, चन्दणदासस्स सिणेहेण त्ति (१)।

समिद्धा। वअस्स, सच्चं चन्दणदासस्स सिणेहेण त्ति, अथ चन्दणदासस्स मोक्खं पेक्खसि (२)।

सिद्धा। वअस्स, कुदो से अधण्णस्स मोक्खो? से क्खु सम्पदं अज्जचाणक्कस्स आणत्तीए, दुवेहिंपि अह्मेहिं वज्झट्ठाणं पवेसिअ वावाददव्वो (३)।

समिद्धा ॥ सक्रोधं ॥ किं, अज्जचाणक्कस्स घातअजणो अण्णो णत्थि, जदो अह्मे ईदिसे णिसंसे कम्मे णियुज्जीअदि (४)।

सिद्धा। वअस्स ण जीवलोए णिवसिदुकामो अज्जचाणक्कस्स आणत्तिं पडिऊलेदि; ता, एहि, चंडालवेशधारिणो भविअ, चन्दणदासं वज्झट्ठाणं णेह्म (५)।

॥ इत्युभौ निष्क्रान्तौ ॥ प्रवेशकः ॥

---

(१) वयस्य, तर्कयामि चन्दनदासस्य स्नेहेनेति।

(२) वयस्य, सत्यं चन्दनदासस्य स्नेहेनेति, अथ चन्दनदासस्य मोचं पश्यसि।

(३) कुतोऽस्याधन्यस्य मोचः? स खलु साम्प्रतमार्य्यचाणक्यस्याज्ञया, द्वाभ्यामपि आवाभ्यां वध्यस्थानं प्रवेश्य व्यापादयितव्यः।

(४) वयस्य, किमार्य्यचाणक्यस्य घातकजनोऽन्यो नास्ति, यतोऽस्मानीदृशे नृशंसे कर्म्मणि नियुनक्ति।

(५) न जोवलोके निवस्तुकाम आर्य्यचाणक्यस्याज्ञप्तिं प्रतिकूलयति; तदेहि, चण्डालवेशधारिणौ भूत्वा चन्दनदासं वध्यस्थानं नयामः।

॥ ततः प्रविशति रज्जुहस्तः पुरुषः ॥

पुरु। छग्गुणसंजोअदिढा उवाअपरिपाडीघडिदपासमुही,
चाणक्कणीतिरज्जु रिउसंजमणज्जुआ जअदि (१)।
एसो सो अज्ज चाणक्कस्स उन्दुरएण चरेण कधिदो वदेसो, जहिं मए अज्जचाणक्काणत्तीए अमच्चरक्खसो पेक्खिदव्वो ॥ विलोक्य ॥ कधं, एसो क्खु अमच्चरक्खसो किदावगुण्ठणो इदोज्जेव आअच्छदि; ता जाव इमेहिं जिण्णुज्जाणपादवेहिं अववारिदसरीरो पेक्खामि, कहिं आसणपरिग्गहं करेदि त्ति (२)

॥ परिक्रम्य तथा स्थितः ॥

॥ ततः प्रविशति यथा निर्दिष्टः सशस्त्रो राक्षसः।

राक्ष ॥ सवाष्पं ॥ कष्टं भोः कष्टं !

उच्छिन्नाश्रयकातरेव कुलटा गोत्रान्तरं श्रीर्गता,
तामेवानुगता गतानुगतिकास्त्यक्तानुरागाः प्रजाः;
आप्तैरप्यनवाप्तपौरुषफलैः कार्य्यस्य धूरुज्झिता,
किं कुर्व्वन्त्वथवोत्तमाङ्गरहितैर्नाङ्गैश्चिरं स्थीयते।

---

(१) षड्गुणसंयोगदृढा उपायपरिपाटीघटितपाशमुखी,।
चाणक्यनीतिरज्जू रिपुसंयमनर्जुका जयति।
(२) एष स आर्य्यचाणक्यस्य उन्दुरकेण चरेण कथितः प्रदेशः, यत्र मया आर्य्यचाणक्याज्ञप्त्या अमात्यराक्षसो द्रष्टव्यः। कथमेष खल्वमात्यराक्षसः कृतावगुण्ठन इतएवागच्छति; तद्यावदेभिर्जीर्णोद्यानपादपैरपवारितशरीरः पश्यामि कुत्रासनपरिग्रहं करोतीति।

अपिच। पतिं त्यक्त्वा देवं भुवनपतिमुच्चैरभिजनं,
गता च्छिद्रेण श्रीर्वृषलमविनीतेव वृषलो
स्थिरीभूता चास्मिन्किमिह करवाम स्थिरमपि;
प्रयात्नं नो येषां विफलयति दैवं द्विषदिव।
मयाहि; देवे गते दिवमतद्विधमृत्युयोग्ये,
शैलेश्वरं तमधिकृत्य कृतः प्रयत्नः;
तस्मिन् हते तनयमस्य; तथाप्यसिद्धि
र्दैवं हि नन्दकुलशत्रुरसौ न विप्रः।
अहो विवेकशून्यता म्लेच्छस्य मलयकेतोः! कुतः,
यो नष्टानपि जीवनाशमधुना शुश्रूषते स्वामिन
स्तेषां वैरिभिरक्षतः कथमसौ संधास्यते राक्षसः;
इत्थं वस्तुविवेकमूढमतिना म्लेच्छेन नालोचितं,
दैवेनोपहतस्य बुद्धिरथवा पूर्व्वं विपर्य्यस्यति।
तदिदानीमपि तावदरातिहस्तगतो वनं गच्छेद्राक्षसा, न चन्द्रगुप्तेन सह सन्धिं कुर्य्यादिति; अथवा काममसत्यसंधइति; वरमयशो, न पुनः शत्रुवचनपरिभूतिः॥ समन्तादवलोक्य सास्रं॥ एतास्तावद्देवस्य पादचंक्रमणपरिचयपवित्रीकृतरथ्या; कुसुमपुरोपकण्ठभूमयः॥
इह हि। शार्ङ्ग्याकृष्टिमुक्तप्रशिथिलकविकाप्रग्रहेणात्र देशे,
देवेनाकारि चित्रं प्रजवितुरगं बाणमोक्षस्थलेषु;
अस्मामुद्यानराजो स्थितमिह कथितं राजभिस्तैर्विनेत्यं,
संप्रत्यालोक्यमानाः कुसुमपुरभुवो भूयसा दुःखयन्ति।

तत् क खलु गच्छामि मन्दभाग्यः ॥ विलोक्य ॥ भवतु, इद मेतज्जीर्णोद्यानमत्र प्रविश्य कुतश्चिच्चन्दनदासस्य वृत्तान्तमुपलप्स्ये ॥ परिक्रम्य स्वगतं ॥ अहो, अलक्षितोपनिपाताः पुरुषाणां समविषमदशाविभागपरिणतयो भवन्ति । कुतः;

पौरैरङ्गुलिभिर्नवेन्दुवदहं निर्दिश्यमानः, शनै
र्यो राजेव पुरा पुरान्निरगमं राज्ञां सहस्रैर्वृतः,
भूयः संप्रति सोऽहमेव नगरे तत्रैव बन्ध्यश्रमो,
जीर्णोद्यानकमेष तस्करइव चासाद्विशामि द्रुतं ।

अथवा । येषां प्रसादादिदमासीत्त एव न सन्ति ॥ नाट्येन प्रविश्य विलोक्य च ॥ अहो, जीर्णोद्यानस्यानाभिरमणीयता । अत्र हि;

विपर्य्यस्तं सौधं कुलमिव महारम्भरचनं,
सरः शुष्कं साधोर्हृदयमिव नाशेन सुहृदः,
फलैर्हीना वृक्षा विगुणविधियोगादिव नया
स्तृणैश्छन्ना भूमिर्मतिरिव कुनीतैरविदुषः ।

अपि चात्र;

क्षताङ्गानां तीक्ष्णैः परशुभिरुदग्रैः क्षितिरुहां
रुजा कूजन्तीनामविरतकपोतोपरुदितैः;
स्वनिर्मोकच्छेदैः परिचितपरिक्लेशकृपया
श्वसन्तः शाखानां व्रणमिव निबध्नन्ति फणिनः ।

एते च तपस्विनो वृक्षाः,

अन्तः शरीरपरिशोषमुपाश्रयन्तः,
कीटक्षतिं शुचमिवातिगुरुं वहन्तः;
छायावियोगमलिना व्यसने निमग्ना,
वृक्षाः श्मशानमुपगन्तुमिव प्रवृत्ताः।

तद्यावदस्मिन् विषमदशापरिणामसुलभे भग्नशिलातले मुहूर्त्तमुपविशामि ॥ उपविश्याकर्ण्य च ॥ अये, तत् किमयमाकस्मिकः शंखपटहविमिश्रो नान्दीनादः श्रूयते। यएषः

प्रकुर्व्वन् श्रोतॄणां श्रुतिपथमसारं गुरुतया,
बहुत्वात्प्रासादैः सपदि परिपीतोज्झितइव,
अहो नान्दीनादः पटुपटहशङ्खध्वनिमहान्,
दिशां दैर्घ्यं द्रष्टुं प्रसरति सकौतूहलइव।

॥ विचिन्त्य ॥ आं, ज्ञातं, एष हि मलयकेतुसंयमनकृतं राजकुलस्य ॥ इत्यर्द्धोक्ते ॥ मौर्य्यकुलस्याधिकपरितोषं पिशुनयति। ॥ सवाष्पं ॥ कष्टं भोः कष्टं!

आवितोऽस्मि श्रियं शत्रोरभिनीय च दर्शितः,
अनुभावयितुं मन्ये, यत्नः संप्रति मां विधेः।

पुरु। आसीणो अअं, ता जाव अज्जचाणक्कस्स आणत्तिं संपादेमि (१)॥ राक्षसमपश्यन्निव तस्यायतो रज्जुपाशेनात्मानमुद्बध्नाति ॥

---

(१) आसीनोऽयं, तद्यावदार्य्यचाणक्यस्याज्ञप्तिं सम्पादयामि।

राच ॥ विलोक्य स्वगतं॥ अये, कथमयमात्मानमुद्बध्नाति। नूनमहमिव दुःखितस्तपस्वी; भवतु, पृच्छाम्येनं ॥ उपसृत्य, प्रकाशं ॥ भद्र, भद्र, किमिदमनुष्ठीयते।

पुरु ॥ सबाष्पं ॥ अज्ज, जं पिअवअस्सविनासदुःखिदो अह्मारिसो मन्दभाओ अनुचिट्ठदि (१)।

राच॥ स्वगतं ॥ प्रथममेव तावन्मया ज्ञातं, नूनमहमिवायमार्त्तस्तपस्वी; भवतु, पृच्छाम्येनं ॥ प्रकाशं॥ भद्र, व्यसनसब्रह्मचारिन्, यदि गुह्यं नाभिभाविकं वा,ततः श्रोतुमिच्छामि किन्ते प्राणपरित्यागकारणं?

पुरु ॥ निरूप्य ॥ अज्ज, ण रहस्सं, ण वा अतिगुरुअं, किन्तु ण सक्कणोमि पिअवस्सविनासदुक्खिदहिअओ, एत्तिअमेत्तम्पि मरणस्स कालहरणं कादुं (२)

राच ॥ निःश्वस्यात्मगतं॥ कष्टमेतेषु सुहृद्व्यसनेषु परवदुदासीनाः प्रत्यादिश्यामहे वयमनेन॥ प्रकाशं॥ भद्र,यदि न रहस्यं, नातिगुरु वा,तत्पुनः श्रोतुमिच्छामि,कथ्यतां का गतिर्दुःखस्येति,

---

(१) आर्य्य, यत् प्रियवयस्यविनाशदुःखितः अस्मादृशो मन्दभाग्यो जनोऽनुतिष्ठति।

(२) आर्य्य न रहस्यं, नवा अतिगुरुकं, किन्तु न शक्नोमि प्रियवयस्यविनाशदुःखितहृदयएतावन्मात्रमपि मरणस्य कालहरणं कर्त्तुं।

पुरु। अहो, निर्ब्बन्धो अज्जस्स, का गदी एसो निवेदेमि। अत्थि एत्थ णअरे मणिआरसेट्ठी जिणुदासो णाम (३)।

राक्ष॥ स्वगतं॥ अस्ति जिष्णुदासश्चन्दनदासस्य परं मित्रं।

पुरु। सो मम पिअवअस्सो (१)।

राक्ष॥ सहर्षमात्मगतं॥ अये, प्रियवयस्य इत्याह; अन्त, सन्निकृष्टः सम्बन्धः ज्ञास्यति चन्दनदासस्य वृत्तान्तं।

पुरु॥ सवाष्पं॥ सो संपदं दीणजणदिण्णविहवो जलणं पविसिदुकामो णअरादो णिक्कन्तो; अहंपि जाव तस्स पिअवअस्सस्स असुणिदव्वं ण सुणेमि, ताव अत्ताणं उब्बन्धिअ वावादेमि त्ति, इमं जिण्णुज्जाणं आअदो (२)

राक्ष। भद्र, अग्निप्रवेशे तव सुहृदः को हेतुः?
किमौषधिपथातिगैरुपहतो महाव्याधिभिः?

पुरु। अज्ज, णहि णहि (३)।

---

(३) अहो, निर्ब्बन्ध आर्य्यस्य, का गतिः, एष निवेदयामि। अस्त्यत्र नगरे वणिक्श्रेष्ठी जिष्णुदासो नाम।

(१) स मम प्रियवयस्यः।

(२) सम्प्रति स दीनजनदत्तविभवो ज्वलनं प्रवेष्टुकामो नगरान्निष्क्रान्तः; अहमपि यावत्तस्य प्रियवयस्यस्याश्रोतव्यं न शृणोमि, तावदात्मानमुद्बध्य व्यापादयामीति जीर्णोद्यानमागतः।

(३) आर्य्य, नहि नहि।

राक्ष। किमग्निविषकन्यया नरपतेर्निरस्तः क्रुधा?

पुरु। अज्ज, सन्तं पावं, सन्तं पावं; एदं णत्थि; चन्दउत्तस्स जनवदेसु अनिसंसापडिवत्ति (१)।

राक्ष। अलभ्यमनुरक्तवान् किमयमन्यनारीजनं?

पुरु॥ कर्णौ पिधाय॥ अज्जसन्तं पावं, अभूमि क्खु एस विणअणिधारस्स सेट्ठिजणस्स, विसेसदो जिणुदासस्स (२)

राक्ष। भद्र किमस्य भवतो यथा सुहृदएव नाशे विषं?

पुरु। अज्ज, अधइं (३)?

राक्ष॥ सावेगमात्मगतं॥ चन्दनदासोऽस्य सुहृदः प्रियसुहृत्तमस्तस्य प्रियसुहृद्विनाश एवाग्निप्रवेशहेतुरिति, यत् समाकुलितएवास्मि सुहृत्स्नेहपक्षपातिना हृदयेन॥ प्रकाशं॥ भद्र तस्यापि तव सुहृदः सुचरितं विस्तरेण श्रोतुमिच्छामि।

पुरु। अज्ज, अदो अवरं ण सक्कुणोमि, मन्दभाओ, मरणस्स विग्घमुप्पादेदुं (४)।

---

(१) आर्य्य, शान्तं पापं, शान्तं पापं; इदं नास्ति चन्द्रगुप्तस्य जनपदेषु अनृशंसा प्रतिपत्तिः।

(२) शान्तं पापं, शान्तं पापं, अभूमिः खल्वेष विनयनिधारस्य वणिग्जनस्य, विशेषतो जिष्णुदासस्य।

(३) आर्य्य, अथ किं।

(४) अतोऽपरं न शक्नोमि, मन्दभाग्यो, मरणस्य विघ्नमुत्पादयितुं।

राक्ष। श्रवणीयां कथां कथयतु भद्रमुखः।

पुरु। का गदी; एसो क्खु निवेदेमि, निसामेदु अज्जो (१)।

राक्ष। भद्र दत्तावधानोऽस्मि।

पुरु। अत्थि, जाणादि अज्जो, एत्थि णअरे मणिआरसट्ठी चन्दणदासो णाम (२)।

राक्ष ॥ सविषादमात्मगतं ॥ एतत्तदपावृतमस्मदिनाश दीक्षाप्रकाशद्वारं दैवेन। हृदय, स्थिरीभव, किमपि ते कष्टतर माकर्णनीयं ॥ प्रकाशं ॥ भद्र श्रूयते मित्रवत्सलः,स साधुः,किं तस्य?

पुरु। सो अ तस्स जिणुदासस्स पिअवअस्सो होदि (३)।

राक्ष ॥ स्वगतं ॥ अयमत्यन्तः शोकवज्रपातो हृदयस्य। ततः;

पुरु। तदो जिण्हुदासेण पिअवअस्सस्स सिणेहसरिसं अज्ज विसत्तो चन्दउत्तो (४)।

राक्ष। कथय किमिति?

पुरु। देव, अत्थि मे गेहे कुटुम्बभरणपज्जत्तो अत्थो, तस्स विणिमयेण मुञ्चदु मे पिअवअस्सो चन्दणदासो त्ति (५)।

---

(१) का गतिः; एष खलु निवेदयामि, निशामयतु आर्यः।

(२) अस्ति, जानात्यार्य्य, इह नगरे मणिकारश्रेष्ठी चन्दनदासो नाम।

(३) स च तस्य जिष्णुदासस्य प्रियवयस्यो भवति।

(४) ततो जिष्णुदासेन वयस्यस्नेहसदृशमद्य विज्ञप्तश्चन्द्रगुप्तः।

(५) अस्ति मे गेहे कुटुम्बभरणपर्य्यन्तोऽयमर्थस्तस्य, विनिमयेन मुच्यतां मे प्रियवयस्यश्चन्दनदास इति।

राक्ष ॥ स्वगतं ॥ साधु जिष्णुदास, साधु; अहो दर्शितो मित्र स्नेहः । कुतः ।

पितॄन् पुत्राः पुत्रान् परवदभिसंधाय पितरो,
यदर्थं सौहार्दं, सुहृदि च समुज्झन्ति सुहृदः ।
प्रियं सद्यस्त्यक्तुं व्यसनिनि वयस्ये व्यवसितः,
कृतार्थोऽयं सोऽर्थस्तव सति वणिक्कोऽपि वणिजः

॥ प्रकाशं ॥ भद्र, ततस्तथाभिहितेन सता किं प्रतिपन्नं मौर्य्येण?

पुरु । अज्ज, तदो एवं भणिदेण चन्दउत्तेण सेट्ठी पडिभणि ा जिणदासो;जिष्णुदास,ण मए अत्यस्स कारणेण सेट्ठी संजमितो चन्दणदासो, किन्तु पच्छादिदो अणेण अमच्चरक्खसस्स घर अणो,वहुसो जाचिदेणावि ण समप्पिदो त्ति;ता जदं अमच्चरक्ख सस्स घरअणं समप्पेदि, तदो अत्थि से मोक्खो; अण्णधा, प्पाणहरो से दण्डो अह्मकोपं पडिमाणेदु त्ति । अण्णोवि जणो एवंण करइस्सदि त्ति भणिअ,वज्झट्ठाणं आणीदो तदो,जाव पिअवअस्सस्स चन्दणदासस्स असुणिदव्वं ण सुणेमि, तावज्जेव्व अत्ताणअं वावादेमि त्ति, जलणे पविसिदुकामो सेट्ठी जिण्णु दासो णअरादो णिग्गदो । अहंपि जाव पिअवअस्स जिष्णु दासस्स असुणिदव्वं ण सुणेमि,ताव उव्वन्धिअ अत्ताणअं वावा देमि त्ति, इमं जिष्णुज्जाणमागदोह्मि (२)

(२) आर्य्य, तत एवं भणितेन चन्द्रगुप्तेन प्रतिभणितः श्रेष्ठी जिष्णुदास; जिष्णुदास, न मयार्थस्य कारणेन श्रेष्ठी चन्दन

राक्ष। न खलु व्यापादितश्चन्दनदासः।

पुरु। अज्ज, ण दाव वावादीअदि; सो क्खु संपदं पुणो पुणो अमच्चरक्खसस्स घरजणं जाचीअदि, ण सो मित्तवच्छलदाए जाचीअन्तोऽपि तं समप्पेदि; ता एदिणा कालणेण होदि से मरणस्स कालहरणं (१)।

राक्ष॥सहर्षमात्मगतं॥ साधु वयस्य चन्दनदास, साधु, साधु;

शिबेरिव समुद्भूतं शरणागतरक्षया,

निचीयते त्वया साधो, यशोऽपि सुहृदा विना।

॥प्रकाशं॥ भद्र, भद्र, गच्छ शीघ्रमिदानीं जिष्णुदासं ज्वलनप्रवेशान्निवारय। अहमपि चन्दनदासं मरणान्मोचयामि।

---

दासः संयमितः, किन्तु प्रच्छादितोऽनेन अमात्यराक्षसस्य गृहजनो, बहुशो याचितेनापि न समर्पितइति; तद्यदि अमात्यराक्षसस्य गृहजनं समर्पयति, तदास्ति तस्य मोक्षो; अन्यथा, प्राणहरस्तस्य दण्डोऽस्मत्कोपं प्रतिमानयतुइति। अन्योऽपि जनो यथा एवं न करिष्यतीति भणित्वा, वध्यस्थानमानीतः। ततो यावदस्य चन्दनदासस्याश्रोतव्यं न शृणोमि, तावदात्मानं व्यापादयामीति, ज्वलने प्रवेष्टुकामः श्रेष्ठी जिष्णुदासो नगरान्निर्गतः। अहमपि यावत् प्रियवयस्यस्याश्रोतव्यं न शृणोमि, तावदात्मानमुद्बध्य व्यापादयामीति, इदं जीर्णोद्यानमागतोऽस्मि।

(१) आर्य्य, न तावत् व्यापाद्यते, स खलु साम्प्रतं पुनः पुनः अमात्यराक्षसस्य गृहजनो याच्यते, न स मित्रवत्सलतय

पुरु। अध, केण उण उवाएण अज्जो चन्दनदासं मरणादो मोचेदि (१)

राक्ष ॥ खड्गमाकृष्य ॥ नन्वनेन व्यवसायसहासुहृदा निस्त्रिंशेन।

ननु, पश्य;

निस्त्रिंशोऽयं विगतजलदव्योमसंकाशमूर्त्ति
र्युद्धश्रद्धापुलकित इव प्राप्तसख्यः करेण,
सत्त्वोत्कर्षात्समरनिकषे दृष्टसारः परैर्मे
मित्रस्नेहाद्विवशमथवा साहसे मां नियुङ्क्ते।

पुरु। अज्ज, एवं सेट्ठिचन्दणदासजीविदं होदित्ति, सुणिदं, विषमदसाविभागपरिणामपडिदो, ण सक्कुणामि णिच्चिदपदं भणिदुं ॥ विलोक्य पादयोर्निपत्य ॥ अध, सुगिहीदणामधेआ अमच्चरक्खसपादा तुह्मे त्ति, ता करेहि मे पसादं संदेहणिण्णएण (२)।

---

याच्यमानोऽपि तं समर्प्पयति; तदेतेन कारणेन भवति तस्य मरणस्य कालहरणं।

(१)। अथ केन पुनरुपायेन चन्दनदासं मरणान्मोचयति आर्य्यः।

(२) अथ, एवं श्रेष्ठिचन्दनदासजीवितं भवतीति श्रुतं, विषमदशाविभागपरिणामपतितो, न शक्नोमि निश्चितपदं भणितुं। अथ सुगृहीतनामधेया आर्य्यराक्षसपादा यूयमिति, तत् कुरु मे प्रसादं संशयनिर्णयेन।

राक्ष। भद्र, सोऽहमनुभूतभर्तृवंशविनाशः सुहृद्विनाशहेतुरनार्यो गृहीतनामा यथार्थो राक्षसः।

पुरु॥ सहर्षं पुनः पादयोर्निपत्य॥ पसीदध, पसीदध; हीमाणहे दिट्ठिआ कदत्थोह्मि (१)।

राक्ष। भद्र, उत्तिष्ठोत्तिष्ठ; अलमिदानीं कालहरणेन; निवेद्यतां जिष्णुदासाय, यथैव राक्षसश्चन्दनदासं मरणान्मोचयतीति॥ निस्त्रिंशोऽयमित्यादि पठन्नाकृष्टखड्गः परिक्रामति॥

पुरु॥ पादयोर्निपत्य॥ पसीदन्तु, पसीदन्तु, अमच्चरक्खसपादा; अत्थि दाव एत्थ णअरे पढमं चंदउत्तहदएण अज्जसअडदासस्स वध आणत्तो; सो अ केणावि वज्झट्ठाणादो अवहरिअ, देसंतरं अववाहिदो तदो; चंदउत्तहदएण, कीस प्पमादो कदोत्ति, अज्ज सअडदाससवधवंचणाए समुज्जलिदो रोसग्गी, घादअजणबधजलेण णिव्वाविदो तदोपहुदि, घातआ जं कंपि गहिदसत्थं अपुव्वं पुरुसं अग्गादो पच्चादो वा पेक्खन्ति, तदो अहुवधेज्जेव्व अत्तणो जीविदं परिरक्खन्तो, अप्पमत्ता, एदे वज्झट्ठाणे वज्झं वावादेन्ति। तं एवं गहिदसत्थेहिं अमच्चपादेहिं तहिं गच्छन्तेहिं, सेट्ठिचंदणदासस्स वधो तुराविदो होदि (२)॥ निष्क्रान्तः॥

---

(१) प्रसीदत, प्रसीदत; आश्चर्यं दिष्ट्या कृतार्थोऽस्मि।

(२) प्रसीदन्तु, प्रसीदन्तु, अमात्यराक्षसपादाः। अस्ति तावदत्र नगरे प्रथमं चन्द्रगुप्तहतकेनार्यशकटदासस्य वध

राक्ष ॥ स्वगतं ॥ अहो दुर्व्वोधश्चाणक्यवटोर्नीतिमार्गः। कुतः;

यदि स शकटो नीतः शत्रोर्मतेन ममान्तिकं,

किमिति निहतस्तेन क्रोधाद्वधाधिकृतो जनः ?

अथ स हतकं तादृग्लेखं कथं न विभावये

दिति मम मतिस्तर्कारूढा न पश्यति निश्चयं।

॥ विचिन्त्य ॥ तस्मात्,

नायं निस्त्रिंशकालः, प्रथममिह कृते घातकानां विघाते,

नीतिः कालान्तरेण प्रकटयति फलं, किं तया कार्य्यमत्र ;

औदासीन्यं न युक्तं, प्रियसुहृदि गते मत्कृते चातिघोरां

व्यापत्तिं, ज्ञातमस्मिन् स्वतनुमहमिमं निष्क्रयं कल्पयामि।

॥ इति निष्क्रान्ताः सर्व्वे ॥

॥ इति षष्ठोऽङ्कः ॥

---

चाज्ञप्तः ; स च केनापि वध्यस्थानादपहृत्य देशान्तरमपवा हितः ; ततश्चन्द्रगुप्तहतकेन कस्मात् कृतः प्रमाद इति आर्य्य शकटदासवधवञ्चनया समुज्ज्वलितो रोषाग्निर्घातकजनवध जलेन निर्व्वापितः, ततः प्रभृति, घातका यं कञ्चित् गृहीतशस्त्रं पुरुषमग्रतः पश्चाद्वा पश्यन्ति, तदा अर्द्धवधे एवात्मनो जीवितं परिरक्षन्तो, ऽप्रमत्ता, एते अप्राप्तवध्यस्थानं वध्यं व्यापादयन्ति तं। एवञ्च गृहीतशस्त्रैरमात्यपादैः तत्र गच्छद्भिः, श्रेष्ठिचन्दनदासस्य वधस्त्वरितो भवति।

## ॥ अथ सप्तमोऽङ्कः ॥

---

॥ ततः प्रविशति चण्डालः ॥

चण्डा। श्रोसलध श्रज्जा, श्रोसलध, श्रवेध, माणहि, श्रवेध। जइ महह लक्खिदुं णिश्रप्पाणे, विहवे, कुले, कलत्ते च। पलिहलध विसमिव लाश्रापत्थं पश्रत्तेण। श्रविश्र; होदि पुलिसस्स वाही, मलणं वा, सेविदे श्रवत्थम्मि; लाश्रापत्थे उण सेविदे सश्रलं चलं मलदि। ता, जइ ण पत्तिश्राश्रध, तदो पेक्खध एदं लाश्रा वत्थकालिणं सेट्ठिचन्दणदासं वज्भट्ठाणं श्राणीश्रमाणं सपुत्त कलत्तं॥ श्राकाशे॥ श्रज्जा किं भणाध? श्रत्थि किं चन्दण दासस्स मोक्खोवाश्रो त्ति? कुदो से श्रधणस्स मोक्खोवाश्रो त्ति? एदं उण श्रत्थि से जइ श्रमच्चरक्खसस्स घरश्रणं समप्पेदि॥ पुनराकाशे॥ किं भणाध? एसे सलणागदवच्छले श्रत्तणो जीविदस्स कालणेण इदिसं श्रकज्जं कलिस्सदि त्ति? श्रज्जा जइ एवं तेण हि श्रवधालेध से श्रसुभ गदिं एत्तिके दाणीं तुह्माणं पडीश्राले (१)

---

(१) श्रपसरत हे श्रार्य्याः, श्रपसरत, श्रवेत, हे मान्याः, श्रवेत यदि मन्यध्वं रक्षितुं निजप्राणान्, विभवान्, कुलानि, कलत्राणि च। परिहरत तस्मात् विषमिव राजापथ्यं प्रयत्नेन। श्रपिच; भवति पुरुषस्य व्याधिर्मरणं सेविते श्रपथ्ये; राजापथ्ये पुनः

॥ ततः प्रविशति द्वितीयचण्डालानुगतो बध्यवेशधारी, शूलं स्कन्धेनाधाय, कुटुम्बिन्या पुत्त्रेण चानुगम्यमानश्चन्दनदासः।

कुटु। हद्धी, हद्धी; अह्मारिसाणंवि कधं चारित्तभङ्गभीरूणं, चोरजणाणं विअ, मरणं पत्तं त्ति। णमो णमो कदन्तस्स। अहवा णिसंसाणं, उदासीणेसुं, इदरेसुं वा, विसेसो अत्थि। तथाहि। मोत्तूण आमिसाइं मरणभएण तिणेहिं जीवंति;वाहा णं मुद्धहरिणे हन्तुं को णाम णिब्बन्धो (१)

---

जीवति सकलं कुलं म्रियते। तद्यदि न प्रत्येथ, तदा पश्यत एनं राजापथ्यकारिणं श्रेष्ठिचन्दनदासं बध्यस्थानमानीयमानं सपुत्रकलत्रं। आर्य्य किं भणथ? अस्ति किं तस्य चन्दनदासस्य मोक्षोपायइति? कुतस्तस्याधन्यस्य मोक्षोपायः? इदं पुनरस्ति तस्य, यदि अमात्यराक्षसस्य गृहजनं समर्पयति। किं भणथ? एष शरणागतवत्सल आत्मनो जीवितकारणेन इदमकार्य्यं करिष्यतीति? आर्य्या, यद्येवं तेन हि अवधत्त तस्यासुभगगतिं एतावानिदानीं युष्माकं प्रतीकारः।

(१) हा धिक्, हा धिक्; अस्मादृशानामपि कथं नित्यचारित्रभङ्गभीरूणां, चौरजनानामिव, मरणं प्राप्तमिति। नमः कृतान्ताय। अथवा नृशंसानां उदासीनेषु इतरेषु वा विशेषोऽस्ति। तथाहि। अर्थात् हरिणाः मुक्ता आमिषाणि मरणभयेन तृणे र्जीवन्ति; व्याधानां मुग्धहरिणान् हन्तुं, को नाम निर्ब्बन्धः।

॥ समन्तादवलोक्य ॥ भाव, पिअवअस्स जिणुदास, कधं पडिवअणंवि मे ण पडिवज्जसि त्ति; अथवा, दुल्लहा क्खु ते पुरिसा, जे इमस्सिं काले दिट्ठिवधेवि चिट्ठन्ति (१)।

चन्द ॥ सवाष्पं ॥ एदे अह्मपिअवअस्सा, अंसुवादमेत्तकेण किदपदीआरा, स्वसरीरेहिं णिअत्तमाणा, परिअत्तमाणसोअदीणवअणा, वाहगरुआए दिट्ठीए मं अणुगच्छन्ति (२)।

चाण्डालौ ॥ परिक्रम्यावलोक्य च ॥ अज्ज, चन्दणदास, पच्चागदोसि बज्झट्ठाणं, ता विसज्जेहि घरअणं (३)।

चन्द। अज्जे कुटुम्बिणि, णिअत्तस्स, तुमं सपुत्ता; बज्झट्ठाणं क्खु एदं, अदो अवरं अब्भमि अणुगच्छिदुं (४)।

---

(१)। भाव, प्रियवयस्य जिष्णुदास, कथं प्रतिवचनमपि मे न प्रतिपद्यसे इति; अथवा, दुर्लभाः खलु ते पुरुषाः, ये इमस्मिन् काले दृष्टिपथेऽपि तिष्ठन्ति।

(२) एतेऽस्मत्प्रियवयस्या अश्रुपातमात्रेण कृतप्रतीकाराः, स्वशरीरैर्निवर्त्तमानाः, परिवर्त्तमानशोकदीनवदना, वाष्पगुर्व्वा दृष्ट्या मामनुगच्छन्ति।

(३) आर्य्य चन्दनदास, प्रत्यागतोऽसि बध्यस्थानं, तत् विसर्जय गृहजनं।

(४) आर्य्ये कुटुम्बिनि, निवर्त्तस्व, त्वं सपुत्रा; बध्यस्थानं खल्विदं, अतोऽपरं अभूमिः खलु अनुगन्तुं।

कुटु॥ सवाष्पं ॥ परलोअं पत्थिदो अज्जो, ण उण देसन्तरं, ता अजोग्गो दाणीं एसो कुलजणस्स णिवत्तिदुं (१)।

चन्द। अज्जे, सच्चं, मित्तकज्जेण मम विणासो, ण पुरिसदोसेण; ता किं हरिसट्ठाणेवि रोदिसि त्ति (२)?

कुटु। अज्ज, जइ एवं ता अणुचिदं दाणीं दे कुलअणस्स णिवत्तिदुं (३)

चन्द। अध किं ववसिदं अज्जाए (४)?

कुटु॥ सवाष्पं॥ भत्तुणो चलणमणुगच्छन्तीए अज्जा णुग्गहो होदु (५)।

चन्द। अज्जे, दुव्ववसिदं एदं दे; ता दाणीं अज्जाए अअं असुणिदलोअव्ववहारो कुमारो अणुगेह्णिदव्वो त्ति (६)।

---

(१) परलोकं प्रस्थित आर्य्यो, न पुनर्देशान्तरं, तदयोग्य मिदानीं एतत् कुलजनस्य निवर्त्तितुं।

(२) आर्य्ये, सत्यं, मित्रकार्य्येण मम विनाशो, न पुरुषदोषेण; तत् किं हर्षस्थानेऽपि रोदिषि?

(३) आर्य्य, यद्येवं तदनुचितं इदानीं ते कुलजनेन निवर्त्तितुं।

(४) अथ किं व्यवसितं आर्य्यया?

(५) भर्त्तुश्चरणमनुगच्छन्त्या आर्य्यानुग्रहो भवति।

(६) आर्य्ये, दुर्व्यवसितमिदं ते; तदिदानीमार्य्यया अश्रुत लोक व्यवहारः कुमारोऽनुग्रहीतव्य इति।

कुटु। अणुगेह्लन्तु णं पसणाओ भअवदीओ कुलदेवदाओ। जाद पुत्तअ, पणमअ अपच्छिमस्स पिदुणो पाएसुं(१)।

पुत्र॥ पादयोर्निपत्य॥ ताद, मए तादविरहिदेण किं अणुचिट्ठिदव्वं(२)?

चन्द। पुत्त, चाणक्कविरहिदे देसे वसिदव्वं(३)।

चाण्डालो। अज्ज चन्दणदास, णिखादे सूले, ता सज्जो दाणीं होहि(४)।

कुटु। अज्जा, परित्ताअध, परित्ताअध(५)।

चन्द। भद्दमुह, मुहुत्तअं चिट्ठ। अइ जीविदवच्छले, किं एत्थ आक्कंदसि? सग्गं गदा क्खु दे देवा णन्दा जे दुःखिदं इत्थीजणं पइदिणं अणुकम्पन्ति(६)।

---

(१) अनुगृह्णन्तु एनं प्रसन्ना भगवत्यः कुलदेवताः। जात पुत्रक, प्रणम अपश्चिमस्य पितुः पादेषु।

(२) तात, मया तातविरहितेन किमनुष्ठातव्यं?

(३) पुत्र, चाणक्यविरहिते देशे वस्तव्यं।

(४) आर्य्य चन्दनदास, निखातं शूलं, तत्सज्ज इदानीं भव।

(५) आर्य्याः, परित्रायत, परित्रायत।

(६) भद्रमुख, मुहूर्त्तं तिष्ठ, अयि जीवितवत्सले, किमत्र आक्रन्दसि? स्वर्गं गताः खलु ते देवा नन्दा ये दुःखितं स्त्रीजनं प्रतिदिनमनुकम्पन्ते।

प्रथमश्चण्डालः। अले वेणुवत्तका, गेह्ण इमं चन्दण दासं, घलअणो सअंज्जेव्व गमिस्सदि (१)।

द्वितीयश्चण्डालः। अले वज्जलोमका, एसे गेह्णामि (२)।

चन्द। भद्दमुह, चिट्ठ मुहुत्तअं, जाव पुत्तअं परिस्सजामि॥ इति पुत्रं परिष्वज्य मूर्ध्नि समाघ्राय॥ जाद पुत्तअ, अवस्सं भविदव्वेवि विणासे मित्तकज्जं समुव्वहमाणो विणास मणुभवामि (३)।

पुत्र। ताद, एदं क्खु भणिदव्वं, किं कुलक्कमो क्खु एसो अह्माणं॥ इति पादयोः पतति॥ (४)।

चाण्डा। अले, गेह्ण वज्जलोमआ।

॥ चाण्डालो गृहीतश्चन्दनदासमारोपयितुं शूले॥

कुटु। अज्जा, परित्ताअध, परित्ताअध (५)।

॥ प्रविश्य अपटीक्षेपेण राक्षसः॥ भवति, न भेतव्यं, न भेतव्यं, भो भोः सेनापते, न खलु व्यापादनीयश्चन्दनदासः। कुतः;

---

(१) अरे वेणुवेत्रक, गृहाणेमं चन्दनदासं, गृहजनः स्वय मेव गमिष्यति।

(२) अरे वज्रलोमक, एष गृह्णामि।

(३) भद्रमुख, तिष्ठ क्षणं, यावत् पुत्रकं परिष्वजामि। जात पुत्रक, अवश्यं भवितव्येऽपि विनाशे मित्रकार्य्यं समुद्वहमानो विनाशमनुभवामि।

(४) तात, इदं खलु भणितव्यं, किं कुलक्रमः खलु एषोऽस्माकं।

(५) आर्य्याः, परित्रायत, परित्रायत।

येन स्वामिकुलं रिपोरिव कुलं दृष्टं विनश्यत्पुरा,
मित्राणां व्यसने महोत्सवइव स्वस्थेन येन स्थितं,
आत्मा यस्य वधाय वः परिभवक्षेत्रीकृतोऽपि, प्रिय
स्तस्येयं मम मृत्युलोकपदवी वध्यस्रगावध्यतां।

चन्द ॥ विलोक्य सवाष्पं ॥ अमच, किं एदं दे व्ववसिदं (१)?

राक्ष। त्वदीयस्य सुचरितैकदेशस्यानुकरणं किल।

चन्द। अमच, सव्वंवि मे णिप्फलं; एदं पआसं करन्तेण मे पिअं अणुचिट्ठिदं अमच्चेण (२)।

राक्ष। सखे चन्दनदास, कृतमुपालम्भेन, स्वार्थप्रधानो हि जीवलोकः। भद्रमुख, अयमर्थो निवेद्यतां तावद्दुरात्मने चाणक्याय।

चाण्डालो। अधकिं त्ति?

राक्ष।

दुष्कालेऽपि कलावसज्जनरुचौ, प्राणैः परं रक्षता
नीतं येन यशस्विना प्रलघुतामौशीनरीयं यशः;
बुद्धानामपि चेष्टितं सुचरितैः क्लिष्टं विशुद्धात्मना,
पूजार्होऽपि स यत्कृते भगवता वध्यत्वमेषोऽस्मि सः।

---

(१) अमात्य, किमिदं ते व्यवसितं?

(२) अमात्य, सर्व्वमपि मे निष्फलं; इमं प्रयासं कुर्व्वता न मे प्रियमनुष्ठितं अमात्येन।

प्रथमः। अले वेणुवत्तआ, तुमं दाव सेट्ठिचन्दणदासं गेह्निअ, इमस्स मसाणपादवस्स च्छाआए मुहुत्तअं चिट्ठ, जाव अहं अज्जचाणक्कस्स णिवेदेमि, जधा गहिदो अमच्चलक्खसो त्ति (१)।

द्वितीयः। अले वज्जलोमआ, एवं होदु (२)।

॥ इति सपुत्त्रदारेण चन्दनदासेन सह निष्क्रान्तः॥

प्रथमः॥ राक्षसेन सह परिक्रम्य॥ के के एत्थ दुआलिआणं निवेदेध दाव, णन्दकुलसेलसञ्चअचूलणकुलिसस्स मोलिअकुलपदिट्ठाविदधम्मसञ्चअस्स अज्जचाणक्कस्स (३)।

राक्ष॥ स्वगतं॥ एतदपि नाम राक्षसेन श्रोतव्यं।

चण्डा। एसो क्खु अज्जणोदिणिअमसंजमिदबुद्धिपुलिसआले गहिदे अमच्चरक्खसे त्ति (४)।

---

(१) अरे वेणुवेत्रक, त्वं तावत् श्रेष्ठिचन्दनदासं गृहीत्वा, अस्य श्मशानपादपस्य च्छायायां मुहूर्त्तं तिष्ठ, यावदहं आर्य्यचाणक्यस्य निवेदयामि, यथा गृहीतोऽमात्यराक्षसइति।

(२) अरे वज्रलोमक, एवं भवतु।

(३) कोऽत्र दौवारिकाणां निवेदयत तावत्, नन्दकुलशैलसञ्चयचूर्णनकुलिशस्य मौर्य्यकुलप्रतिष्ठापितधर्मसञ्चयस्य आर्य्यचाणक्यस्य।

(४) एष खलु आर्य्यनीतिनियमसंयमितबुद्धिपुरुषकारो गृहीतोऽमात्यराक्षसइति।

॥ ततः प्रविशति जवनिकावृतशरीरो मुखमात्रदृश्यः सहर्ष श्चाणक्यः ॥

चाण। भद्र, कथय, कथय।

केनोत्तुङ्गशिखाकलापकपिलो बद्धः पटान्ते शिखी,

पाशैः केन सदागतेरगतिता सद्यः समासादिता,

केनानेकपदानवासितशठः सिंहोऽर्पितः पञ्जरे,

भीमः केन चलैकनक्रमकरो दोर्भ्यां प्रतीर्णोऽर्णवः?

चण्डा। णं णीदिणिउणबुद्धिणा अज्जेणज्जेव (१)।

चाण। भद्र, मा मैवं। नन्दकुलद्वेषिणा दैवेनेति ब्रूहि।

राक्ष॥ विलोक्य स्वगतं॥ अये, अयं स दुरात्मा, अथवा अयं स महात्मा कौटिल्यः।

यतः। आकरः सर्व्वशास्त्राणां, रत्नानामिव सागरः,

गुणैर्न परितुष्यामो, यस्य मत्सरिणो वयं।

चाण॥ विलोक्य सहर्षं स्वगतम्॥ अये, अयममात्य राक्षसः, येन महात्मना,

गुरुभिः कल्पनाक्लेशैर्दीर्घजागरहेतुभिः,

चिरमायासिता सेना वृषलस्य, मतिश्च मे।

॥ जवनिकामपनीयोपसृत्य च॥ भो भो अमात्य राक्षस, विष्णु गुप्तोऽभिवादयते।

राक्ष॥ स्वगतं॥ अमात्य इति लज्जाकरमिदमिदानीं विशेषणपदं॥ प्रकाशं॥ भो भो विष्णुगुप्त, न मां श्वपाकस्पर्शदूषितं स्प्रष्टुमर्हसि।

(१) ननु नीतिनिपुणबुद्धिना आर्य्येणैव।

चाण। अमात्य राक्षस, नायं श्वपाकः, अयं खलु दृष्टपूर्व्व एव भवता सिद्धार्थकनामा राजपुरुषः। योऽप्यसौ द्वितीयः, सोऽपि स सिद्धार्थकनामा राजपुरुष एव; ताभ्यामेव सह सौहार्द्दमुत्पाद्य,शकटदासोऽपि तपस्वी, तं तादृशमजानन्नेव कपटलेखं मयैव लेखितः।

राक्ष ॥ आत्मगतं ॥ दिष्ट्या शकटदासं प्रति अपनीतो विकल्पः।

चाण। किं बहुना, संक्षेपतः कथयामि;

ये ते भद्रभटादयः, स च तथा-लेखः, स सिद्धार्थक
स्तच्चालङ्करणत्रयं, स भवतो मित्रं भदन्तः किल,
जीर्णोद्यानगतः स चार्त्तपुरुषः, क्लेशः स च श्रेष्ठिनः,
सर्व्वोऽसौ मम ॥ इत्यर्द्धोक्ते लज्जां नाटयति ॥
सर्व्वोऽसौ वृषलस्य वीर भवता संयोगमिच्छोर्नयः।

तदेष वृषलस्त्वां द्रष्टुमागच्छति। पश्यैनं।

राक्ष॥ स्वगतं॥ का गतिः ॥ प्रकाशं॥ यएष पश्यामि।

॥ ततः प्रविशति, सेवकैरनुगम्यमानो राजा ॥

राजा॥ स्वगतम्॥ विनैव युद्धादार्य्येण पराजितं दुर्जयमरिकुलमिति, यत् सत्यं, लज्जित इवास्मि। मम हि।

फलयोगमवाप्य सायकानामनियोगेन विलक्षतां गतानाम्,
स्वशुचेव भवत्यधोमुखानां निजतूणीशयनव्रतप्रतिष्ठा।

अथवा।

विगुणीकृतकार्म्मुकोऽपि जेतुं भुवि जेतव्यमसौ समर्थएव,
स्वपतोऽपि ममैव यस्य तन्त्रे गुरवो जाग्रति कार्य्यजागरूकाः।
॥ चाणक्यमुपसृत्य ॥ आर्य्य चन्द्रगुप्तः, प्रणमति ;

चाण। वृषल, सम्प्राप्तो मर्य्याधिपः, तदभिवादयस्व तत्रभवन्तं अमात्यराक्षसं, पैत्रकस्तवायममात्यमुख्यः।

राक्ष ॥ स्वगतं ॥ योजितोऽनेन सम्बन्धः।

राजा ॥ राक्षसमुपसृत्य ॥ आर्य्य, चन्द्रगुप्तोऽहमभिवादये।

राक्ष॥ विलोक्य स्वगतं॥ अये, अयं चन्द्रगुप्तः। य एषः

बालएव हि लोकेन सम्भावितमहोदयः,
क्रमेणारूढवानार्य्यं, यूथैश्वर्य्यमिव द्विपः।

॥ प्रकाशं ॥ राजन्, विजयस्व।

राजा। आर्य्य,

जगतः किं न विजितं मयेति प्रविचिन्त्यतां,
गुरौ षाड्गुण्यचिन्तायामार्य्ये त्वयि च जाग्रति।

राक्ष ॥ स्वगतं॥ स्पृशति मां कौटिल्यशिष्यो भृत्यभावेन, अथवा विनयेनैव चन्द्रगुप्तस्य, मत्सरस्तु मे विपरीतं कल्पयति। सर्व्वथा स्थाने यशस्वी चाणक्यः। कुतः

द्रव्यं जिगीषुमधिगम्य जडात्मनोऽपि
नेतुर्यशस्विनि पदे नियता प्रतिष्ठा।
अद्रव्यमेत्य तु विविक्तनयोऽपि मन्त्री
शीर्णाश्रयः पतति कूलजवृक्षवृत्त्या।

चाण। अमात्य राक्षस, अपीष्यते चन्दनदासस्य जीवितम्।

राक्ष। भो विष्णुगुप्त, कः सन्देहः?

चाण। अमात्य राक्षस, अगृहीतशस्त्रेण भवता नानुगृह्यते वृषल, इत्यतः सन्देहः। तद्यदि सत्यमेव चन्दनदासस्य जीवितमिष्यते, ततो गृह्यतामिदं शस्त्रं।

राक्ष। भो विष्णुगुप्त, मा मैवम्। अयोग्या वयमेतस्य ग्रहणे, विशेषतस्त्वया गृहीतस्य शस्त्रस्य।

चाण। अमात्य राक्षस, योग्योऽहमयोग्यो भवानिति कथमेतत्, पश्य,

अश्वैः सार्द्धमजस्रदत्तकविकाक्षामैरशून्यासनैः,
स्नानाहारविहारपानशयनस्वेच्छासुखैर्व्वर्जितान्;
माहात्म्यादतिपौरुषस्य भवतो दृप्तारिदर्पच्छिदः,
पश्यैतान् परिकल्पनाव्यतिकरप्रोच्छूनवंशान् गजान्।

अथ वा किमनेन। न खलु भवतः शस्त्रग्रहणमन्तरेण चन्दनदासस्य जीवितमस्ति।

राक्ष॥ स्वगतं॥

नन्दस्नेहगुणाः स्पृशन्ति हृदये, भृत्योऽस्मि तद्विद्विषां,
ये सिक्ताः स्वयमेव पाणिपयसा च्छेद्यास्तएव द्रुमाः।
शस्त्रं मित्रशरीरकेषु सदृशा व्यापारणीयं, मदा
कार्य्याणां गतयो विधेरपि न यान्त्यालोचनागोचरम्।

॥ प्रकाशं॥ भो विष्णुगुप्त, उपानय खड्गं, नमः सर्व्वकार्य्यप्रतिपत्तिहेतवे सुहृत्स्नेहाय; का गतिरेष सज्जोऽस्मि।

चाण ॥ सहर्षं शस्त्रमर्पयित्वा ॥ वृषल, वृषल, अमात्यराक्षसेनेदानीं गृहीतशस्त्रेणानुगृहीतो, दिष्ट्या वर्द्धते भवान्।

राजा। आर्य्यप्रसाद एष चन्द्रगुप्तेनानुभूयते।

॥ प्रविश्य ॥ पुरुषः। जअदु जअदु अज्ज। अज्ज, एसो क्खु भद्दभडभाउराअणप्पमुहेहिं सञ्जमिअकलचलणो मलयकेदू पडिहारभूमिए अवत्थापिदो; ता एवं सुणिअ, एत्थ अज्जो प्पमाणम् (१)।

चाण। श्रुतं श्रुतं; भद्र, निवेद्यताममात्यराक्षसाय, अयमिदानीं राजकार्य्यं करिष्यति।

राक्ष ॥ स्वगतं ॥ कथं, दासीकृत्येदानीं विज्ञापनाय मां मुखरीकरोति कौटिल्यः, का गतिः ॥ प्रकाशं ॥ राजन् चन्द्रगुप्त, विदितमेव यथा वयं मलयकेतौ किञ्चित्कालान्तरमुषितास्तत्परिरक्ष्यन्तामस्य प्राणाः।

राजा ॥ चाणक्यमुखमवलोकयति ॥

चाण। वृषल, प्रतिमानयितव्योऽयममात्यराक्षसस्य प्रथमः प्रणयः ॥ पुरुषमवलोक्य ॥ भद्र, मद्वचनादुच्यन्तां भद्रभटप्रभृतयः, अमात्यराक्षसविज्ञापितो, देवश्चन्द्रगुप्तः प्रयच्छति, मलयकेतवे पित्र्यमेव विषयमतो गच्छन्तु भवन्तः; सहानेन प्रतिष्ठिते चास्मिन् पुनरागन्तव्यं।

---

(१) जयतु जयत्वार्य्यः। आर्य्य, एष खलु भद्रभट भागुरायणप्रमुखैः संयमितकरचरणो मलयकेतुः प्रतिहारभूम्यामवस्थापितस्तस्मादिदं श्रुत्वार्य्यः प्रमाणमिति।

# RETNAVALI;

## A DRAMA,

*IN FOUR ACTS.*

BY

SRI HERSHA DEVA.

---

**With a Commentary,**

EXPLANATORY OF THE PRA'KRIT PASSAGES.

---

PUBLISHED UNDER THE AUTHORITY OF THE COMMITTEE OF PUBLIC INSTRUCTION.




---

**Calcutta:**

PRINTED AT THE EDUCATION PRESS, CIRCULAR ROAD; AND SOLD AT THE DEPOSITORY, PATALDANGA.

1832.

# ॥ रत्नावली ॥



श्रीश्रीहर्षदेवरचिता।



साधारणविद्यावृद्ध्यर्थकसमाजाधिपतीनामाज्ञया

कलिकाताराजधान्यां इडुकेशनयन्त्रालये

प्राकृतभाषाव्याख्यासहिता

मुद्रिताभूत्।



१८३२



# ॥ रत्नावली ॥

## ॥ नाटिका ॥

---

## ॥ प्रथमाङ्कः ॥

### ॥ नान्दी ॥

पादाग्रस्थितया मुहुस्तनभरेणानीतया नम्रतां
शम्भोः सस्पृहलोचनत्रयपथं यान्त्या तदाराधने,
ह्रीमत्या शिरसीहितः सपुलकः स्वेदोद्गमोत्कम्पया,
विश्लिष्यन्,कुसुमाञ्जलिर्गिरिजया क्षिप्तो ऽन्तरे पातु वः।

अपिच।

औत्सुक्येन कृतत्वरा सह भुवा व्यावर्त्तमाना ह्रिया,
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः,
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी,नवे सङ्गमे,
संरोहत्पुलका हरेण हसता श्लिष्टा,शिवायास्तु वः।

अपिच।

संप्राप्तं मकरध्वजेन मथनं त्वत्तो मदर्थे पुरा,
तद्युक्तं बहुमार्गगां मम पुरो निर्लज्ज वोढुस्तव;
तामेवानुनयस्व भावकुटिलां हे कृष्णकण्ठ ग्रहं
मुञ्चेत्याह रुषा यमद्रितनया,तन्मौलि,पायात्स वः।

अपिच।

क्रोधेद्धैर्दृष्टिपातैस्त्रिभिरुपशमिता वह्नयोऽमी त्रयोऽपि,
त्रासार्त्ता ऋत्विजोऽधश्चपलगणहृतोष्णीषपट्टाः पतन्ति,
दक्षः सौत्यस्य पत्नी विलपति कृपणं विद्रुतं देवि देवैः,
शंसन्नित्यात्तहासो मखमथनविधौ पातु देव्यै शिवो वः।

किञ्च।

जितमुडुपतिना; नमः सुरेभ्यो; द्विजवृषभा निरुपद्रवा भवन्तु;
भवतु च पृथिवी समृद्धशस्या, प्रतपतु चन्द्रवपुर्नरेन्द्रचन्द्रः।

॥ नान्द्यन्ते सूत्रधारः॥

अलमतिप्रसङ्गेन। अद्याहं वसन्तोत्सवे सबहुमानमाहूय, नानादिग्देशागतेन राज्ञः श्रीश्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तः। यथास्मत्स्वामिना श्रीश्रीहर्षदेवेनापूर्व्ववस्तुरचनालङ्कृता रत्नावली नाम नाटिका कृतेत्यस्माभिः श्रोत्रपरम्परया श्रुता,नतु प्रयोगतो दृष्टा,तत्तस्यैव राज्ञः सकलजनहृदयाह्लादिनो बहुमानादस्मासु चानुग्रहबुद्ध्या यथावत्प्रयोगेण त्वया नाटयितव्येति॥ परिक्रम्यावलोक्य च॥ तद्यावदिदानीं नेपथ्यरचनां कृत्वा, यथाभिलषितं सम्पादयामि॥ परिषदमवलोक्य॥ अये आवर्जितानि सकलसामाजिकानां मनांसीति मे निश्चयः।

यतः

श्रीहर्षो निपुणः कविः, परिषदप्येषा गुणग्राहिणी,
लोके हारि च वत्सराजचरितं,नाट्ये च दक्षा वयं;
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं,किं पुन
र्मद्भाग्योपचयादयं समुदितः सर्व्वो गुणानां गणः।

तद्यावदहं गृहं गत्वा,गृहिणीमाहूय, सङ्गीतकमनुतिष्ठामि॥ परि

क्रम्य नेपथ्याभिमुखमवलोक्य ॥ इदमस्मदीयं गृहं यावत्प्रविशामि ॥ उच्चैः ॥ आर्य्ये, इतस्तावत्।

॥ प्रविश्य ॥ नटी। अज्जउत्त इअह्मि, आणवेदु अज्जो, को णिओओ अणुचिट्ठीअदुत्ति (१)

सूत्र। आर्य्ये रत्नावलीदर्शनोत्सुकोऽयं राजलोकः, तद्गृह्यतां नेपथ्यं।

नटी ॥ निश्वस्य सोद्वेगं ॥ अज्ज णिच्चिन्तो दाणिं सि तुमं, ता कीस ण णच्चसि, मह उण मन्दभाआए एक्काजेव्व दुहिदा, सावि तुए कहिंवि देसन्तरे दिणा, कहं एवं दूरदेसट्ठिदेन भत्तुणा सह से पाणिग्गहणं भविस्सदित्ति, इमाए चिन्ताए अप्पावि मे ण पडिभादि, ता किं उण णच्चिदव्वं (२)

सूत्र। आर्य्ये दूरस्थेनेत्यलमुद्वेगेन। पश्य

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्,

आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः।

नेपथ्ये ॥ साधु भरतपुत्र, साधु, एवमेतत् कः सन्देहः ॥ द्वीपादिति पुनः पठति ॥

सूत्र ॥ आकर्ण्य नेपथ्याभिमुखमवलोक्य ॥ आर्य्ये, किमतःपरं, विलम्बसे, नन्वयं मम यवीयान् भ्राता, गृहीतयौगन्धरायणभूमिकः प्राप्त एव

---

(१) आर्य्यपुत्र, इयमस्मि, आज्ञापयतु, को नियोगः अनुष्ठीयतामिति।

(२) आर्य्यपुत्र, निश्चिन्त इदानीमसि त्वं, तस्मात्कथं नु नृत्यसि? मम पुनर्मन्दभाग्याया एकैव दुहिता, सापि त्वया देशान्तरे दत्ता, कथमेवं दूरदेशस्थितेन भर्त्रा सह तस्याः पाणिग्रहणं भविष्यतीति, अनया चिन्तया आत्मापि मे न प्रतिभाति, तत्किं पुनर्नर्त्तितव्यं।

तदेहि, नेपथ्यग्रहणाय सज्जीभवावइति। निष्क्रान्तौ प्रस्तावना।

ततः प्रविशति यौगन्धरायणः॥

यौग। एवमेतत् कः सन्देहः॥ द्वीपादिति पुनः पठित्वा॥ अन्यथा क सिद्धादेशजनितप्रत्ययप्रार्थितायाः सिंहलेश्वरदुहितुः समुद्रे यानभङ्गनिमग्नायाः फलकासादनं? क च कौशाम्बीयेन वणिजा सिंहलेभ्यः प्रत्यागच्छता तदवस्थायाः सम्भावनं रत्नमालाचिह्नाया इहानयनञ्च॥ सहर्षं॥ सर्वथा स्पृशन्ति नः स्वामिनमभ्युदयाः॥ विचिन्त्य॥ मयापि चैनां देवीहस्ते सगौरवं निक्षिपता युक्तममेवानुष्ठितं; श्रुतञ्च मया वाभ्रव्योऽपि कञ्चुकी वसुभूतिना सह सिंहलेश्वरामात्येन कथं कथमपि समुद्रादुत्तीर्य्य, कौशलोच्छित्तये गतवता रुमण्वता मिलितः इति। तदेवं निष्पन्नमपि प्रभुप्रयोजनं न मे धृतिमावहतीति। कष्टोऽयं खलु भृत्यभावः। यतः;

प्रारम्भेऽस्मिन् स्वामिनो वृद्धिहेतौ दैवेनेत्थं दत्तहस्तावलम्बे,
सिद्धेर्भ्रान्तिर्नास्ति, सत्यं; तथापि स्वेच्छाचारी भीत एवास्मि भर्त्तुः।

॥ नेपथ्ये कलकलः॥ आकर्ण्य॥ अये, मधुरमभिहन्यमानमृदुमृदङ्गानुगतसङ्गीतमधुरः पुरः पौराणामुच्चरति चर्चरीध्वनिः। तथा तर्कयामि मदनमहोत्सवं पुरजनप्रमोदमवलोकयितुं प्रासादाभिमुखं प्रस्थितो देव इति॥ ऊर्ध्वमवलोक्य॥ अये, कथमधिरूढएव देवः प्रासादं। य एषः,

विश्रान्तविग्रहकथो रतिमान् जनस्य
चित्ते वसन्, प्रियवसन्तकएव साक्षात्।

पर्य्युत्सुको निजमहोत्सवदर्शनाय,
वत्सेश्वरः कुसुमचापइवाभ्युपैति ।

तद्यावद्गृहं गत्वा, कार्य्यशेषं चिन्तयामीति ॥ निष्क्रान्तः ॥

विष्कम्भकः ॥

॥ ततः प्रविशत्यासनस्थो गृहीतवसन्तोत्सववेशो राजा विदूषकश्च ॥

राजा ॥ सहर्षमवलोक्य ॥ सखे, वसन्तक !

विदू । आणवेदु भवं ।

राजा । राज्यं निर्जितशत्रु, योग्यसचिवे न्यस्तः समस्तो भरः,
सम्यक्पालनलालिताः प्रशमिताशेषोपसर्गाः प्रजाः,
प्रद्योतस्य सुता, वसन्तसमयस्त्वञ्चेति नाम्ना धृतिं
कामः काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः ।

विदू ॥ सहर्षं ॥ भो वअस्स, एव्वं णेदं । अहं उण जाणाभि, ण भवदो, ण कामदेवस्स, मम ज्जेव्व एकस्स बह्मणवडुअस्स अअं मअणमहूसवो, जस्स किदे पिअवअस्सेण एव्वं मन्तीअदि ॥ विलोक्य ॥ ता किं इमिणा, पेक्ख दावदमस्स महुमत्तकामिणीजणसअंगाहगहिदणच्चणाअरजणजणिदकोदूहलस्स, समन्तदो संबुत्तमद्दलाद्दामचच्चरीसद्दमुहररत्थामुहसोहिणा, पदृणपडवासपुञ्जपिञ्जरिदद्दसदिसामुहस्स, मस्सिरीअंद, मअणमहूसवस्स (१)

---

( १ ) एवमिदं न । अहं पुनर्जानामि, न भवतो, न कामदेवस्य, ममैव एकस्य ब्राह्मणवटुकस्य अयं मदनमहोत्सवो, यस्य कृते प्रियवयस्येनैवं मन्त्र्यते । तत्किं पुनरनेन; पश्य तावदस्य मधुमत्तकामिनीजनस्वयंग्राह गृहीतनृत्यनागरजनजनितकौतूहलस्य, समन्ततः सम्वृत्तमर्द्दलोद्दाम

राजा ॥ सहर्षं समन्तादवलोक्य ॥ अहो परां कोटिमधिरोहति प्रमोदः पुरः पौराणां।

तथाहि।

कीर्णैः पिष्टातकौघैः कृतदिवसमुखैः कुङ्कुमक्षोदगौरै
र्हैमालङ्कारभाभिर्भरनमितशिखैः शेखरैः कैङ्किरातैः,
एषा वेशाभिलक्ष्यस्वविभवविजिताशेषवित्तेशकोषा,
कौशाम्बी शातकुम्भद्रवखचितजनेवैकपीता विभाति।

अपिच।

धारायन्त्रविमुक्तसन्ततपयःपूरप्लुते सर्वतः
सद्यः सान्द्रविमर्दकर्दमकृतक्रीडेक्षणं प्राङ्गणे;
उद्दामप्रमदाकपोलनिपतत्सिन्दूररागारुणैः
सैन्दूरीक्रियते जनेन चरणन्यासैः पुरः कुट्टिमं।

विदू ॥ विलोक्य ॥ एदं पि दाव सुविअड्ढजणापूरिदसिंगकजलप्पहारमुक्कसिक्कारमणोहरं वारविलासिणीजणविलसिदं आलोएदु पिअवअस्सो (१)

राजा ॥ विलोक्य ॥ वयस्य, सम्यक् दृष्टं त्वया।

---

चर्चरीशब्दमुखररथ्यामुखशोभिनः, प्रकीर्णपटवासपुञ्जपिञ्जरितदशदिङ्मुखस्य,सश्रीकतां, मदनमहोत्सवस्य।

(१) इदमपि तावत् सुविदग्धजनापूरितशृङ्गकजलप्रहारमुक्तशीत्कारमनोहरं वारविलासिनीजनविलसितं आलोकयतु प्रियवयस्यः।

कुतः। अस्मिन् प्रकीर्णपटवासकृतान्धकारे,
दृष्टो मनाङ्मणिविभूषणरश्मिजालैः,
पातालमुद्यतफणाकृतिशृङ्गकोऽयं,
मामद्य संस्मरयतीव भुजङ्गलोकः।

विदू ॥ विलोक्य ॥ भो वअस्स, पेक्ख, पेक्ख, एसा क्खु, मअणीआ मअणरसविसअदत्ताभिणआ णच्चन्ती, चूदलदिआए सह इदोजेव्व आअच्छदि त्ति ता पेक्खदु भवं (१)

॥ ततः प्रविशतो मदलीलां नाटयन्त्यौ दिपदीखण्डं गायन्त्यौ चेट्यौ ॥

॥ मदनिका गायति ॥

कुसुमाउहपिअदूअओ, मउलाइं सुघणचुम्बओ,
सिढिलिअमाणग्गहओ, वाअइ दाहिणपवणओ।
विरहिअवउलामोअओ, कंखिअप्पिअअणमेलओ,
पडिवालणअसमत्थओ, भमइ जुवदीसत्थओ।
इअ पढमं मऊमासो जणस्स हिअआइं कुणइ वाउलाइं,
पच्चा विद्धइ कामो लद्धपसरेहिं कुसुमवाणेहिं (२)

---

(१) भो वयस्य पश्य पश्य एषा खलु मदनिका मदनरसविषयदत्ताभिनया नृत्यन्ती चूतलतिकया सह इतएवागच्छति तत्पश्यतु भवान्।

(२) कुसुमायुधप्रियदूतकः, मुकुलानि सुघनचुम्बकः,
शिथिलितमानग्रहो वाति दक्षिणपवनकः।
वाञ्छितवकुलामोदः काङ्क्षितप्रियजनमेलकः।
प्रतिपालनासमर्थको भ्रमति युवतिसार्थः;
इह प्रथमं मधुमासो जनस्य हृदयानि करोति व्याकुलानि,
पश्चात् विध्यति कामो लब्धप्रसरैः कुसुमवाणैः।

राजा ॥ निर्व्वर्ण्य ॥ अहो मधुरोऽयमासां निर्भरः क्रीडारसः। तथाहि;

स्रस्तः स्रग्दामशोभां त्यजति विरचितामाकुलः केशपाशः,
क्षीवाया नूपुरौ च द्विगुणतरमिवाक्रन्दतः पादलग्नौ;
व्यस्तः कम्पानुबन्धादनवरतमुरो हन्ति हारोऽयमस्याः,
क्रीडन्त्याः पीडयेव स्तनभरविनमन्मध्यभङ्गानपेक्षं।

विदू ॥ सहासं ॥ भो वअस्स,अहम्मि एदाण बहुपरिस्सराणं मज्झे णच्चन्तो,गायन्तो,मअणमहूसवं माणइस्सं ( १ )

राजा ॥ सस्मितं ॥ वयस्य एवं क्रियतां।

विदू। जं भवं आणवेदित्ति ॥ उत्थाय तयोर्मध्ये नृत्यति ॥ भोदि मअणिए,भोदि चूदलदिए,एदं चच्चरिअं मम्पि शिक्खावेध ( २ )

मद ॥ विहस्य ॥ हदास,णक्खु चच्चरी एसा द्विपदीखण्डं एदं ( ३ )

विदू ॥ सहर्षं॥ किं एदिणा खण्डेण मोअआ लड्डुआ वा करीअन्ति ( ४ )

---

( १ ) भो वयस्य, अहमप्येतेषां मध्ये नृत्यन्, गायन्, मदनमहोत्सवं सम्मानयिष्यामि।

( २ ) भो मदनिके,भवति चूतलतिके, एतच्चर्चरीकं मामपि शिक्षयतं।

( ३ ) हताश, नहि चर्चरी,एषा द्विपदीखण्डमिदं।

( ४ ) भवति, एतेन खण्डेन किं मोदका लड्डुका वा क्रियन्ते।

मद॥ विहस्य॥ हदास, णहि, णहि पठीअदि क्खु एदं (१)

विदू॥ सविस्मयं॥ पठीअदि क्खु एदं॥ सविषादं॥ जइ पठीअदि, ण भुञ्जीअदि, ता मम एदिणा ण कज्जं। वरं पिअवअस्सस्स ज्जेव्व सआसं गमिस्सं (२) तथा करोति॥ अपसृत्योपविशति उभे आकर्षतः।

विदू। आकर्षयति॥

मद। हदास, एहि कहिं गच्छसि, इधज्जेव्व कीलम्ह (३)

विदू॥ आत्मानं इति प्रपलाय्य राजानमुपसृत्य॥ वअस्स, भो णच्चिदोह्मि, णहि कीलिअ पलाइदोह्मि (४)

चूतलतिका। अज्जे मअणिए, चिरं क्खु अह्मेहिं कीलिदं, ता एहि, णिवेदेह्म दाव भट्टिणीए सन्देसं महाराअस्स (५)

मद। एहि तुवरेह्म।

॥ परिक्रम्योपसृत्य च॥ उभे। जेदु जेदु भट्टा। भट्टा, देवी आणवेदि॥ इत्यर्द्धोक्ते लज्जां नाटयन्त्यौ॥ णहि, णहि, विणवेदि (६)

---

(१) हताश, नहि, नहि, पठ्यते खल्वेतत्।

(२) पठ्यते खल्विदं। यदि पठ्यते, न भुज्यते, तस्मादनेनैतेन न कार्य्यं। वरं, प्रियवयस्यस्य समीपं गमिष्यामि।

(३) हताश एहि कुत्र गच्छसि, इहैव क्रीडामः।

(४) भो वयस्य, नर्त्तितोऽस्मि, नहि क्रीडित्वा पलायितोऽस्मि।

(५) सखि मदनिके, चिरं खल्वस्माभिः क्रीडितं, तस्मादेहि, निवेदयामो देव्याः सन्देशं महाराजाय।

(६) सखि त्वरावहे। जयतु जयतु भर्त्ता। राजन्, देवी आज्ञापयति।

राजा ॥ सहर्षं विहस्य सादरं ॥ मदनिके, नन्वाज्ञापयतीत्येतदेव रम णीयं विशेषतोऽद्य मदनमहोत्सवे। तदुच्यतां, किमाज्ञापयति देवी।

विदू। आः दासीए धीए, किंत्ति देवी आणवेदि (१)

चेट्यौ। एवं भट्टिणी विणवेदि, जहा क्खु अज्ज मए मअरन्दुज्जाणं गदुअ, रत्तासोअसम्वड्डिदस्स भअवदो कुसुमाउहस्स पूआ णिव्वत्तिदव्वा, तत्थ अज्जउत्तेण सण्णिहिदेण होदव्वंत्ति ॥ २ ॥

राजा। वयस्य, किं वक्तव्यमुत्सवादुत्सवान्तरमापतितर्मिति।

विदू। ता उट्ठेहि, तहिंज्जेव्व गच्छम्ह, जेण तहिं गदस्स ममावि वह्म णवालअस्स सोत्थिवाअणं किम्पि भविस्सदित्ति ॥ ३ ॥

राजा। मदनिके, गम्यतां, देव्यै निवेदयितुं अयमहमागतएव मक रन्दोद्यानमिति।

चेट्यौ। जं भट्टा आणवेदित्ति ॥ ४ ॥ निष्क्रान्ते ॥

---

(१) दास्याः पुत्रि, किमिति देवी आज्ञापयति।

(२) एव देवी विज्ञापयति, यथा खलु अद्य मया मकरन्दोद्याने गत्वा, रक्ताशोकसंवर्द्धितस्य भगवतः कुसुमायुधस्य पूजा निर्व्वर्त्तयितव्या, तत्र चार्य्यपुत्रेण सन्निहितेन भवितव्यमिति।

(३) भो वयस्य, तस्मादुत्तिष्ठ, तत्रैव गच्छाम, येन तत्र गतस्य मे ब्राह्मणबालकस्य स्वस्तिवाचनं किमपि भविष्यतीति।

(४) यद्भर्त्ताज्ञापयति।

राजा। वयस्य, एह्यवतराव॥ उभौ प्रासादादवतरणं नाटयतः॥

राजा। वयस्य, आदेशय मकरन्दोद्यानस्य मार्गं।

विदू। एदु भवं इति॥ परिक्रामतः॥

विदू॥ अग्रतोऽवलोक्य॥ भो एदं तं मअरन्दुज्जाणं; ता एहि,पविसम्ह इति॥ प्रविशतः (१)

विदू॥ सविस्मयं॥ भो महाराअ,पेक्ख,पेक्ख,एदं तं मलअमारुदान्दोलिअमण्डलन्तसहआरमञ्जरीरेणुपडलपडिबद्धपडविआणं, मत्तमउअरनिअरमुक्कझङ्कारमिलिदमऊरकोइलालावसङ्गीदसुहावहं, तुहागमणदंसिआअरं, विअ, मअरंदुज्जाणं लक्खीअदि। ता पविसदु भवं (२)

राजा॥ समन्तादवलोक्य॥ अहो रम्यता मकरन्दोद्यानस्य, इहाद्य,

उद्यद्विद्रुमकान्तिभिः किसलयैस्ताम्रां त्विषं बिभ्रतो,
भृङ्गालीविरुतैः कलैरविशदव्याहारलीलाभृतः,
घूर्णन्तो मलयानिलाहतिचलैः शाखासमूहैर्मुहु
र्भ्रान्तिं प्राप्य मधुप्रसङ्गमधुना मत्ता, इवामी द्रुमाः।

---

(१) भो एतन्मकरन्दोद्यानं तस्मादागच्छ प्रविशावः।

(२) भो महाराज, पश्य, पश्य, एतत् खलु मलयमारुतान्दोलितमण्डलायमानसहकारमञ्जरीरेणुपटलप्रतिबद्धपटवितानं; मत्तमधुकरनिकरमुक्तझङ्कारमिलितकोकिलालापसङ्गीतकसुखावहं, त्वदागमनदर्शितादरमिव, मकरन्दोद्यानं लक्ष्यते। तस्मात्प्रविशतु भवान्।

अपिच ।

मूले गण्डूषसेकासव इव वकुलैर्वास्यते पुष्पवृष्ट्या,
मध्वाताम्रे तरुण्या मुखशशिनि चिराच्चम्पकान्यद्य भान्ति ।
आकर्ण्याशोकपादाहतिषु च रसतां निर्भरं नूपुराणां
झङ्कारस्यानुगीतैरनुकरणमिवारभ्यते भृङ्गनार्यैः ।

विदू ॥ आकर्ण्य ॥ भो वअस्स, ण एदे मङ्कअरा णेउरसद्दं अनुहरन्ति; णेउरसद्दो ज्जेव्व एसो देवीए परिअणस्स ( १ )

राजा । वयस्य, सम्यगवधारितं ।

॥ ततः प्रविशति वासवदत्ता काञ्चनमाला सागरिका विभवतश्च परिवारः ॥

वास । हञ्जे कञ्चणमाले, आदेसेहि मे मअरंदुज्जाणस्स मग्गं ( २ )

काञ्च । एदु एदु भट्टिणी ( ३ ) परिक्रम्य ॥

वास । हञ्जे कञ्चणमाले, अध केत्तिअदूरे दाणिं सो रत्तासोअपाअवो, जहिं मए भअवदो मअणस्स पूआ णिव्वत्तइदव्वा ॥ ४ ॥

---

( १ ) भो वयस्य, न एते मधुकरा नूपुरशब्दमनुहरन्ति; नूपुरशब्द एष एव देव्याः परिजनस्य ।

( २ ) चेटि काञ्चनमाले, आदेशय मकरन्दोद्यानस्य मार्गं ।

( ३ ) एतु एतु भर्त्री ।

( ४ ) चेटि काञ्चनमाले, अथ कियद्दूरे स रक्ताशोकपादपो, यत्र या भगवतः कुसुमायुधस्य पूजा निर्व्वर्त्तयितव्या ।

काञ्च । भट्टिणि, आसण्णं ज्जेव्व किं ण पेक्खदि भट्टिणी? इअं क्खु, सा णिरंतरुब्भिण्णकुसुमसोहिणो भट्टिणीए परिग्गहिदा माहवीलदा; एसा क्खु अवरा णोमालिआलदा, जाए अआलकुसुमसमुग्गमसड्ढालुणा भट्टिणा अणुदिणं आआसीअदि अप्पा; ता एदं अतिक्कमिअ, दीसदीज्जेव्व सो रत्तासोअपाअवो जहिं देवी पूअं णिव्वत्तइस्सदि (१)

वास । ता, एहि, तहिं ज्जेव्व लहुं गच्छम्ह (२)

काञ्च । एदु एदु भट्टिणी (३) सर्व्वाः परिक्रामन्ति ॥

वास । अअं सो रत्तासोअपादवो, जहिं अहं पूअं णिव्वत्तइस्सं; ता एहि मे पूआणिमित्ताइं उवअरणाइं उवणेहि (४)

साग ॥ उपसृत्य ॥ भट्टिणि एदं सव्वं सज्जं (५)

---

(१) भर्त्रि, आसन्नमेव न प्रेक्षते भर्त्री? इयं खलु सा निरन्तरोद्भिन्न कुसुमशोभिनी भर्त्र्या परिगृहीता माधवीलता; एषापि खलु अपरा नव मालिकालता यस्याः अकालकुसुमोद्गमश्रद्धालुना भर्त्रा अनुदिवसमात्मा आयास्यते; एतदतिक्रम्य, दृश्यते एव रक्ताशोकपादपः यत्र देवी पूजां निर्व्वर्त्तयिष्यति ।

(२) तस्मादेहि, तत्रैव शीघ्रं गच्छामि ।

(३) एतु एतु भर्त्री ।

(४) अयं स रक्ताशोकपादपो, यत्राहं पूजां निर्व्वर्त्तयिष्यामि; एहि मे पूजानिमित्तानि उपकरणानि उपनय ।

(५) एतत सर्व्वं सज्जं ।

वाम ॥ निरूप्यात्मगतं ॥ अहो पमादो परिअणस्स, जस्स ज्जेव्व दंसण पधादो पअत्तेण रक्खीअदि, तस्स ज्जेव्व दिट्ठिगोअरं पडिदा भवे। भोदु, एदं दाव ॥ प्रकाशं ॥ हञ्जे साअरिए, कीस तुमं अज्ज मअणमहूसवपराहीणे परिअणे सारिअं उज्झिअ, इहागदा ता तहिंज्जेव्व लहुं गच्छ, एदं पि सव्वं पूओवअरणं कञ्चणमालाए हत्थे समप्पेहि ( १ )

साग। जं भट्टिणी आणवेदित्ति ॥ तथा कृत्वा, कति पदानि गत्वा, आत्मगतं ॥ सारिआ मए उण सुसङ्गदाए हत्थे समप्पिदा एदंपि अत्थि मे पेक्खिदुं कोदूहलं, किं जहा तादस्स अन्तेउरे भअवं अणङ्गो अच्चीअदि, इधवि तहज्जेव्व अध ण वेत्ति। ता अलक्खिआ भविअ पेक्खिस्सं। जाव इह पूआसमओ होदि, ताव अहम्पि भअवन्तं मअणंज्जेव्व पूइदुं कुसुमाइं अवचिणिस्सं ॥ परिक्रम्यावलोक्य च इति कुसुमावचयं नाटयति ( २ )

---

( १ ) अहो प्रमादः परिजनस्य, यस्यैव दर्शनपथात् प्रयत्नेन रक्ष्यते। तस्यैव कथं दृष्टिगोचरं पतिता भवेत्, भवतु, एतत् तावत्। चेटि सागरिके, कथं त्वं मदनमहोत्सवपराधीने परिजने सारिकामुज्झित्वा इहागता; तस्मात् तत्रैव गच्छ, एतच्च सर्वं पूजोपकरणं काञ्चनमालाहस्ते समर्पय।

( २ ) यद्भर्त्री आज्ञापयति। सारिका मया पुनः सुसङ्गताया हस्ते समर्पिता; इदमप्यस्ति प्रेक्षितुमद्य मम कौतूहलं, किं यथा तातस्यान्तःपुरे भगवाननङ्गोऽर्च्यते, अत्रापि तथैव अथ नवेति। तस्मादनभिलक्षिता भूत्वा प्रेक्षिष्ये तद्यावत् पूजासमयो भवति, तावदहमपि भगवन्तं मदनमेव पूजयितुं कुसुमान्यवचेष्यामि।

वास। कञ्चणमाले, पडिट्ठावेहि असोअमूले भअवन्तं पज्जुम्नं (१)

काञ्च। जं भट्टिणी आणवेदित्ति ॥ तथा करोति ॥

विदू॥ परिक्रम्यावलोक्य च॥ भो वअस्स, जधा वीसन्तो णेउरसद्दो, तथा तक्केमि आअदा देवी असोअमूलंत्ति (२)

राजा। वयस्य सम्यगवधारितं, पश्य, इयं देवी, या किलैवा

कुसुमसुकुमारमूर्त्तिर्दधती नियमेन तनुतरं मध्यं,

आभाति मकरकेतोः पार्श्वस्था चापयष्टिरिव।

तदेनामुपसर्पावः।

राजा॥ उपसृत्य॥ प्रिये वासवदत्ते।

वास॥ विलोक्य॥ कधं अज्जउत्तो! जअदु जअदु अज्जउत्तो। अलङ्करेदु इमं देसं आसणपडिग्गहेण; एदं आसणं, एत्थ उवविसदु अज्जउत्तो (३)

राजा॥ नाट्येनोपविशति॥

काञ्च। भट्टिणी, सहत्थदिणेहिं कुसुमकुङ्कुमचन्दनत्थासएहिं सोहिदं रत्तासोअपाअवं गदुअ, अच्चिअदु भअवं पज्जुम्नो (४)

---

(१) चेटि काञ्चनमाले, प्रतिष्ठापय अशोकमूले भगवन्तं प्रद्युम्नं।

(२) भो वयस्य, यथा विश्रान्तो नूपुरशब्दस्तथा तर्कयामि आगता देवी अशोकमूलमिति।

(३) कथमार्य्यपुत्रो! जयतु जयतु आर्य्यपुत्रः। अलङ्करोतु इमं देशं आसनपरिग्रहेण; इदमासनं, अत्रोपविशतु आर्य्यपुत्रः।

(४) भर्त्रि स्वहस्तदत्तैः कुसुमकुङ्कुमचन्दनस्थासकैः शोभितं रक्ताशोकपादपं गत्वा, अर्च्यतां भगवान् प्रद्युम्नः।

वास। उवणेहि मे पूजोवअरणाइं (१)

काञ्च॥ उपनयति॥

वास॥ तथा करोति॥

राजा। प्रिये वासवदत्ते,

प्रत्ययमज्जनविशेषविविक्तकान्ति

कौसुम्भरागरुचिरस्फुरदंशुकान्तं;

विभ्राजसे, मकरकेतनमर्चयन्ती,

बालप्रवालविटपिप्रभवा लतेव।

अपिच।

स्पृष्टस्त्वयैव, दयिते, स्मरपूजाव्यापृतेन हस्तेन,

उद्भिन्नापरमृदुतरकिसलयइव लक्ष्यतेऽशोकः।

अपिच।

अनङ्गोऽयमनङ्गत्वमद्य निन्दिष्यति ध्रुवं,

यदनेन न सम्प्राप्तः पाणिस्पर्शोत्सवस्तव।

काञ्च। भट्टिणि अच्चिदो भअवं पज्जुणो; ता करेहि भत्तुणो पूआसक्कारं (२)

वास। उवणेहि मे कुसुमाइं विलेवणञ्च (३)

काञ्च। भट्टिणि, एदं सव्वं सज्जं (४)

वास॥ नाट्येन राजानं पूजयति॥

(१) उपनय मे पूजोपकरणानि।

(२) भर्त्त्रि, अर्च्चितो भगवान् प्रद्युम्नः; तस्मात् कुरु भर्त्तुः पूजासत्कारं।

(३) उपनय मे कुसुमानि विलेपनञ्च।

(४) इदं सर्व्वं सज्जं।

साग॥ गृहीतकुसुमा॥ हड्डी,हड्डी,कहं कुसुमलोहोक्खित्तहिअआए अदिचिरं ज्जेव्व मए कदं; ता इमिणा सिन्दुवारविडवेण ओवारिअसरीरा भविअ पेक्खामि॥ विलोक्य॥ कहं, पेक्खिदो ज्जेव्व अपुव्वो कुसुमाउहो अम्हाणं तादस्स अन्तेउरे चित्तगदो अचीअदि,इह पच्चक्खो लक्खीअदि। ता अहंपि इमेहिं कुसुमेहिं इह ट्ठिदा ज्जेव्व भअवन्तं कुसुमाउहं पूअइस्सं॥ इति कुसुमानि प्रक्षिपति॥ णमो दे भअवं कुसुमाउह,सुभदंसणो मे भविस्ससि दिट्ठं जं दिट्ठव्वं; अमोघदंसणो मे भविस्ससि॥ इति प्रणमति॥ अच्चरीअं! दिट्ठावि, पुणो पेक्खिदव्वो, ता जाव ण कोवि मं पेक्खदि दाव ज्जेव्व गमिस्सं॥ इति निष्क्रामति (१)

काञ्च। अज्ज वसन्तअ, एहि, सम्पदं तुमंपि सोत्थिवाअणं पडिच्छेहि (२)

विदू॥ उपसर्पति॥

---

(१) हा धिक्, हा धिक्, कथं कुसुमलोभोत्क्षिप्तहृदयया अतिचिरमेव मया कृतं; तस्मादमुनैव सिन्धुवारविटपेनापवारितशरीरा भूत्वा प्रेक्षिष्ये। कथं, प्रेक्षितएव अपूर्व्वः कुसुमायुधः अस्माकं तातस्यान्तःपुरे चित्रगतोऽर्च्यते,इह प्रत्यक्षो लक्ष्यते। तस्मादहमपि एतैः कुसुमैरिह स्थितैव भगवन्तं कुसुमायुधं पूजयिष्यामि। नमस्ते भगवन् कुसुमायुध शुभदर्शनो मे भविष्यसि दृष्टं यद्द्रष्टव्यं; अमोघदर्शनो मे भविष्यसि। आश्चर्य्यं! दृष्टोऽपि पुनः प्रेक्षितव्यः। तद्यावत् न कोऽपि प्रेक्षते तावदेव गमिष्यामि।

(२) आर्य्य वसन्तक, एहि, साम्प्रतं त्वमपि स्वस्तिवाचनिकं प्रतीक्ष।

वास ॥ विलेपनकुसुमाभरणदानपूर्व्वकं ॥ अज्ज, एदं सोत्थिवाअणं पडीच्छ ॥ इत्यर्पयति (१)

विदू ॥ सहर्षं गृहीत्वा ॥ सोत्थि भोदीए (२)

॥ नेपथ्ये वैतालिकः पठति ॥

अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा
वास्थानीं समये समं नृपजनः सायन्तने सम्पतन्‌,
संप्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीच्यते।

साग ॥ श्रुत्वा,सहर्षं परिवृत्य,राजानं दृष्ट्वा; सस्पृहं ॥ कहं, अअं सो राआ उअअणो णाम,जस्स अहं तादेण दिण्णा;ता परप्पेसणदूसिदंवि मे सरीर एदस्स दंसणेण दाणिं बहुमदं संवुत्तं (३)

राजा। कथमुत्सवापहृतचेतोभिः सन्ध्यातिक्रमोऽप्यस्माभिर्नोपलक्षितः। देवि पश्य

उदयगिरितटान्तरितमियं प्राची सूचयति दिङ्निशानाथं,
परिपाण्डुना मुखेन प्रियमिव हृदयस्थितं रमणी।

देवि, तदुत्तिष्ठावः आवासाभ्यन्तरमेव प्रविशावः॥

॥ सर्व्वे उत्थाय परिक्रामन्ति ॥

---

(१) आर्य्ये, इदं स्वस्तिवाचनिकं प्रतीच्छ।

(२) स्वस्ति भवत्यै।

(३) कथमयं स राजा उदयनो नाम, यस्याहं तातेन दत्ता, तस्मात्परप्रेषणदूषितमपि मे शरीरं एतस्य दर्शनेनाद्य बहुमतं संवृत्तं।

सागं। कधं पत्थिदा देवी; भोदु, तुरिश्रं गमिस्सं॥ राजानं सस्पृहं दृष्ट्वा, निश्वस्य च ॥ कधं मन्दभाइणीए मए पेक्खिदुंवि चिरं ण पारिदा श्रश्रं जणो (१)

इति निष्क्रान्ता।

राजा॥ परिक्रामन्॥

देवि, त्वन्मुखपङ्कजेन शशिनः शोभातिरस्कारिणा
पद्मान्यानि विनिर्जितानि सहसा गच्छन्ति विच्छायतां;
श्रुत्वा ते परिवारवारवनितागीतानि भृङ्गाङ्गना
लीयन्ते मुकुलान्तरेषु शनकैः सञ्जातलज्जा इव।

॥ इति निष्क्रान्ताः सर्व्वे ॥

इति प्रथमोऽङ्कः॥

---

(१) कथं प्रस्थिता देवी; भवतु, तदहमपि त्वरिता गमिष्यामि। हा धिक् हा धिक् मया मन्दभागिन्या चिरं प्रेक्षितुमपि न पारितः अयं जनः।

## ॥ अथ द्वितीयोऽङ्कः ॥



ततः प्रविशति सारिकापञ्जरव्यग्रहस्ता सुसङ्गता ।

सुसं । हद्धी, हद्धी, अध दाणिं मम हत्थे इमं सारिअं णिक्खिविअ कहिं गदा मे पिअसही साअरिआ भविस्सदि ॥ अन्यतो दृष्ट्वा ॥ एसा क्खु णिउणिआ इधज्जेव्व आअच्छदि ता,जाव एदं पुच्छिस्सं (१)

॥ ततः प्रविशति निपुणिका ॥

निपु । उअलद्धो क्खु मए भट्टिणो वुत्तन्तो, ता जावगदुअ भट्टिणीए णिवेदेमि ॥ २ ॥

॥ इति परिक्रामति ॥

सुसं । हला णिउणिए, कहिं दाणिं तुमं विह्मआक्खित्तहिअआ विअ,इध ट्टिदं मं अवहीरिअ कुदो अदिक्कामसि ॥ ३ ॥

---

(१) हा धिक्, हा धिक्, अथेदानीं मम हस्ते इमां सारिकां निक्षिप्य कुत्र गता मे प्रियसखी सागरिका भविष्यति। एषा खलु निपुणिका इत एवागच्छति, तद्यावदेनां प्रच्छामि।

(२) उपलब्धो मया भर्तुर्वृत्तान्तः, तद्यावद्गत्वा आर्य्यायै निवेदयामि।

(३) सखि निपुणिके, त्वं कुत्रेदानीं विस्मयोत्क्षिप्तहृदयेव, इह स्थितां मामवधीर्य्य कुतोऽतिक्रामसि।

निपु। कधं, सुसङ्गदा ; हला सुसङ्गदे, सुट्ठु तुए जाणिदं एदं क्खु मम विह्मश्रस्स कारणं, अज्ज किल भट्टा, सिरिश्रपव्वदादो आश्रदस्स, सिरिखण्डदासणामहेअस्स, धम्मिअस्स, सआसादो, अश्रालकुसुमसंजणण दोहलं सिक्खिअ, अत्तणो पडिग्गहिदं णोमालिअं कुसुमसमिद्धिसोहिअं करिस्सदित्ति ; तहिं एदं वुत्तन्तं देवीए जाणिदुं पेसिदह्मि तुमं उण कहिं पत्थिदा ? ( १ )

सुसं। पिश्रसहीं साश्ररिअं अण्णेसिदुं ॥ २ ॥

निपु। दिट्ठिश्रा मए साश्ररिश्रा गहीदसमुग्गश्रचित्तफलश्रवट्टिश्रा कश्रलीधरं पविसन्ती, ता गच्छ पिश्रसहीं अहंपि देवीसश्रासं गमिस्सं ( ३ )

॥ इति निष्क्रान्ते प्रवेशकः ॥

---

( १ ) कथं, प्रियसखी सुसङ्गता सखि सुसङ्गते, सुष्ठु त्वया ज्ञातं इदं खलु मम विस्मयस्य कारणं। अद्य किल भर्त्ता, श्रीपर्व्वतादागतस्य श्रीखण्डदासनामधेयस्य धार्म्मिकस्य सकाशात्, अकालकुसुमसंजननदोहदकं शिक्षित्वा, तामात्मनः परिगृहीतां नवमालिकां कुसुमसमृद्धिशोभितां करिष्यतीति एवं वृत्तान्तं ज्ञातुं देव्या प्रेषितास्मि त्वं पुनः क्व प्रस्थिता ?

( २ ) प्रियसखीं सागरिकामन्वेष्टुं।

( ३ ) दृष्टा मया तव प्रियसखी सागरिका गृहीतसमुद्गकचित्रफलकवर्त्तिका कदलीगृहं प्रविशन्ती, तद्गच्छ प्रियसखीं, अहमपि देवीसकाशं गमिष्यामि।

ततः प्रविशति गृहीतचित्रफलका मदनावस्थां नाटयन्ती सागरिका ।

साग । हिअअ,पसीद,पसीद;किं इमिणा आआसमेत्तफलेण दुल्लहज णपात्थणाणुबन्धेण । अणञ्च । जेण एव्व दिट्ठेण ए ईदिसो सन्तावो णं वड्ढ दि,पुणोवि,तंजेव्व पेक्खिदुं अहिलससित्ति अहो दे मूढदा । अइ णिसं स हिअअ,जम्मदोपहुदि सह संवड्ढिअं इमं जणं परिचइअ,खणमेत्तदं सणपरिचिदं जणं अणुगच्छन्तो,ण लज्जेसि? अहवा को,तुह दोसो, अणंग सरपडणभीदेण तुए एव्वं अज्ज ववसिदं । भोदु,दाव, अणंगं दाव उवाल हिस्सं ॥सामर्षं॥ भअवं कुसुमाउह,णिज्जिदसअलसुरासुरो भविअ,इत्थि आजणं पहरन्तो, कधं ण लज्जेसि? अहवा अणंगोऽसि सव्वधा,मम मन्द भाइणीए इमिणा दुण्णिमित्तेण मरणंज्जेव्व उवट्ठिदं ॥ फलकमव लोक्य ॥ ता जाव इह ण कोवि आअच्छदि, दाव आलेखसमप्पिदं तं अभिमदं जणं पेक्खिअ, जहासमीहिदं तहा करिस्सं ( १ )

---

( १ ) हृदय, प्रसीद, प्रसीद; किममुना आयासमात्रफलकेन दुर्लभजनप्रार्थनानुबन्धेन । अन्यच्च । येनैव दृष्टेन एतादृशः सन्तापो ननु वर्द्धते, पुनरपि तं जनं प्रेक्षितुमभिलषसीति अहो ते मूढता । अयि नृशंस हृदय,जन्मतः प्रभृति सह सम्वर्द्धितं इमं जनं परित्यज्य, क्षणमात्रदर्शन परिचितं जनमनुगच्छन्, कथं न लज्जसे? अथवा कस्तव दोषो, अनङ्ग शरपतनभीतेन त्वया एवमद्य व्यवसितं। भवतु तावत् अनङ्गं तावदुपालप्स्ये। भगवन् कुसुमायुध निर्ज्जितसकलसुरासुरो भूत्वा,कथं स्त्रीजनं प्रहरन् न लज्जसे अथवा,अनङ्गोऽसि सर्व्वथा, मम मन्दभाग्याया अमुना दुर्निमि त्तेन मरणमेव उपस्थितं । तद्यावदिह कोऽपि नागच्छति, तावदेव आले खसमर्पितं तं अभिमतं जनं प्रेक्ष्य, यथासमीहितं तथा करिष्यामि ।

॥ सावष्टम्भमेकमना भूत्वा नाय्येन फलकं गृहीत्वा निश्वस्य । जद्दवि मे अदिसद्धसेण वेवदि अग्गं अतिमेत्तं अग्गहत्तो, तहवि तस्स जणस्स अणो दंसणोवाओ णत्थित्ति, ता जहा तहा आलिहिअ, णं पेक्खिस्सं (१)

॥ इति नाय्येन लिखति ॥

॥ ततः प्रविशति सुसङ्गता ॥

सुस॰ । एदं क्खु कदलीहरं, ता जाव पविसामि ॥ प्रविश्यावलोक्य च, सविस्मयं ॥ किंउण एसा गुरुआणुराओक्खित्तहिअआ किम्पि आलिहन्ती ण मं पेक्खदि, भोदु, ता जाव से दिट्ठिवहं परिहरिअ णिरूवइस्सं ॥ खैरं पृष्ठतोऽस्याः स्थित्वा दृष्ट्वा सहर्षं ॥ कहं भट्टा आलिहिदो । साऊ साअरिए, साऊ, अहवा ण कमलाअरं वज्जिअ, राअहंसी अण्णस्सिं अहिरमदि (२)

---

(१) यद्यपि मे अतिसाध्वसेन वेपते अयमतिमात्रमग्रहस्तः, तथापि तस्य जनस्यान्यो दर्शनोपायो नास्ति, इति तस्माद्यथा तथा भवतु, आलिख्य एनं प्रेक्षिष्ये ।

(२) इदं खलु कदलीगृहं, प्रविशामि । किं पुनरेषा गुर्व्वनुरागो त्क्षिप्तहृदया किमप्यालिखन्ती न मां पश्यति भवतु, तस्माद्यावदस्या दृष्टिपथं वर्ज्जयित्वा निरूपयिष्यामि किमेषा आलिखतीति । कथं भर्त्ता एतया आलिखितः, साधु प्रियसखि, साधु, अथवा कमलाकरमुज्झित्वा राजहंसी नान्यमभिरमते ।

साग ॥ सवाष्पं ॥ आलिहिदो मए एसो, किं उण अणअरदणिवड न्तवाहसलिलेण मे दिट्ठी पेक्खिदुं ण पहवदि।

॥ ऊर्ध्वमश्रूणि संहरन्ती, सुसङ्गतां दृष्ट्वा, उत्तरीयेण फलकं प्रच्छादयन्ती विलोक्य स्मितं कृत्वा ॥ कहं पिअसही सुसङ्गदा, सहि सुसङ्गदे इदो उवविसह्म (१)

सुस ॥ उपविश्य फलकं गृहीत्वा दृष्ट्वा च॥ सहि, को एसो तुए आलिहिदो (२)

साग। पउत्तमअणमहोसवे भअवं अणङ्गो ॥ ३ ॥

सुसं ॥ सस्मितं ॥ अहो दे णिउणत्तणं किं! उण सुण्णंविअ चित्तं पडिभादि, ता अहंपि आलिहिअ रदिसणाहं करिस्सं (४)

॥ वर्तिकां गृहीत्वा नाट्येन लिखति ॥

---

(१) आलिखितो मया एष, किं पुनरनवरतनिपतद्बाष्पसलिलेन मे दृष्टिः प्रेक्षितुं न प्रभवति। कथं प्रियसखी सुसङ्गता, प्रियसखि सुसङ्गते अत्रोपविशामः।

(२) सखि क एष त्वया आलिखितः।

(३) प्रवृत्तमदनमहोत्सवे भगवाननङ्गः।

(४) अहो ते निपुणत्वं! किं पुनः शून्यमिव चित्रं प्रतिभाति, तस्मादहमपि आलिख्य रतिसनाथं करिष्यामि।

सार ॥ विलोक्य सक्रोधं ॥ सुसङ्गदे, कीस तुए अहं एत्थ आलिहिदा? (१)

सुसं ॥ विहस्य ॥ सहि, किं अकारणे कुप्पसि जादिसो? तुए कामदेवो आलिहिदो, तादिसी मए रई आलिहिदेत्ति। ता अण्णधाभाविणि, किं तुह एदिणा आलविदेण; कहेहि सव्वं वुत्तन्तं। (२)

सार ॥ सलज्जा ॥ णं जाणिदह्मि पिअसहीए ॥ प्रकाशं ॥ पिअसहि, महदी क्खु मे लज्जा; ता तहा करेसु जहा ण कोवि अवरो एदं वुत्तन्तं जाणादित्ति। (३)

सुसं। सहि मा लज्ज; ईदिसस्स कण्णारअणस्स एव्व ईदिसे वरे अहिलासेण होदव्वं तहवि जहा ण कोवि अवरो एदं वुत्तन्तं जाणिस्सदि; तह करेमि। एदाए उण मेधाविणीए सारिआए एत्थ कारणेन होदव्वं, कदावि एसा इमस्स आलावस्स गहिदत्था कस्सवि पुरदो मन्तइस्सदित्ति। (४)

---

(१) सखि, कथं त्वयाहमत्रालिखिता?

(२) सखि किमकारणं कुप्यसि? यादृशस्त्वया कामदेव आलिखितः मयापि तादृशी रतिरालिखिता तस्मात् अन्यथासंभाविनि, किं तवैतेनालापेन; कथय सर्व्वं वृत्तान्तं।

(३) ननु ज्ञातास्मि प्रियसख्या। प्रियसखि महती खलु मे लज्जा; तस्मात्तथा करोषि यथा न कोऽपि इमं वृत्तान्तं जानातीति।

(४) मा लज्जस्व; ईदृशस्य कन्यकारत्नस्य ईदृशे वरे अभिलाषेण भवितव्यं; तथापि यथा न कोऽपि अपर इमं वृत्तान्तं ज्ञास्यति; तथा करोमि

साग ॥ सहि अदोवि मे अधिअदरं सन्दावो वट्टदि। (१)

॥ इति मदनावस्थां नाटयति ॥

सुसं ॥ सागरिकाया हृदये हस्तं दत्वा ॥ सहि,समस्सस,समस्सस; जाव इमाए दिग्घिआए णलिणीपत्ताणि मुणालिआं अ गेह्निअ,लहु आअ च्छामि (२)

॥ इत्युत्थाय परिक्रम्योपसृत्य च नलिनीपत्राणि गृहीत्वा, हृदये ददाति; नलिनीपत्रैः प्रथमं मृणालैर्वलयानि रचयित्वा, सागरिकाया हृदये निक्षिपति ॥

साग ॥ सहि,अवणेहि इमाइं णलिणीपत्ताइं,मुणालवलयाइं अ; अलं इदिणा; कीस अआरणे अत्ताणं आआसेसि णं भणामि;

दुल्लहजणअणुराओ, लज्जा गरुई, परव्वसा अप्पा,

पिअसहि,विसमं पेम्मं,मरणं सरणं णवरमेक्कं (३) ॥ इतिमूर्च्छति ॥

---

एतया मेधाविन्या सारिकया अत्र कारणेन भवितव्यं, एषा अस्यालापस्य गृहीतार्था कस्यापि पुरतो मन्त्रयिष्यतीति।

(१) अतोऽपि मे अधिकतरं सन्तापो वर्त्तते।

(२) सखि,समाश्वसिहि,समाश्वसिहि, यावदस्यादीर्घिकातो नलिनीपत्राणि मृणालिकाश्च गृहीत्वा लघ्वागच्छामि।

(३) सखि, अपनय इमानि नलिनीपत्राणि,मृणालवलयानि च, अलमेतेन; कथमकारणेनात्मानमायासयसि ननु भणामि।

दुर्लभजनानुरागो लज्जा गुर्व्वी परवश आत्मा।

प्रियसखि, विषमं प्रेम मरणं शरणं केवलमेकं।

॥ नेपथ्ये कलकलः ॥

कण्ठे कृत्वावशेषं कनकमयमधः शृङ्खलादाम कर्षन्,
क्रान्त्वा द्वाराणि हेलाचलचरणरणत्किङ्किणीचक्रवालः,
दत्तातङ्को गजानामनुसृतसरणिः संभ्रमादश्वपालैः,
प्रभ्रष्टोऽयं प्लवङ्गः प्रविशति नृपतेर्मन्दिरं मन्दुरायाः।

अपिच ॥

नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः।
पर्य्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं,
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः।

सुसं ॥ आकर्ण्य ससंभ्रमं ॥ सहि, उट्ठेहि, उट्ठेहि; एसो क्खु दुट्ठवाणरो इदो जेव्व आअच्छदि। (१)

साग। किं दाणीं करेह्म। (२)

सुसं ॥ एहि इमस्सिं तमालविडवन्धआरे पविसिअ एदं अदिवाहेह्म। (३)

॥ परिक्रम्य उभे एकान्ते पर्य्यवस्थिते ॥

साग॥ सुसङ्गदे, कहं तुए चित्तफलओ उज्झिदो, कदावि कोवि तं पेक्खदि। (४)

---

(१) सखि, उत्तिष्ठ, उत्तिष्ठ; एष खलु दुष्टवानर इत एवागच्छति।
(२) सखि, अत्र किमिदानीं कुर्म्मः।
(३) अस्मिन् तमालविटपान्धकारे प्रविश्यैनमतिक्रमामः।
(४) सखि, कथं त्वया चित्रफलक उज्झितो, कदापि कोऽपि तं द्रक्ष्यति।

सुसं। अइ सुत्थिदे, किं अज्जवि चित्तफलएण करिस्ससि, एसोवि दधिभत्तलंपडो एदं पञ्जरं उग्घाडिअ दुट्ठवाणरो अदिक्कन्तो, एसा क्खु मेहाविणी उड्डीणा, अण्णदो गच्छदि, ता एहि लहुं अणुसरेम्ह, इमस्स आलावस्स गहिदक्खरा कस्सवि पुरदो मन्तइस्सदि। (१)

साग॥ सहि एव्वं करेम्ह॥ इति परिक्रामतः॥ (२)

॥ नेपथ्ये ही ही भोः अच्चरिअं अच्चरिअं। (३)

साग॥ विलोक्य॥ सुसङ्गदे, जाणीअदि कहं पुणो दुट्ठवाणरो जेव्व आअच्छदि। (४)

सुसं॥ दृष्ट्वा विहस्य॥ अइ कादरे, ण भेहि, भट्टिणो, परिवासवत्ती क्खु, एसो अज्ज वसंतओ। (५)

॥ ततः प्रविशति वसन्तकः॥

---

(१) अयि सुस्थिते, किमद्यापि चित्रफलकेन करिष्यसि, एष दधि भक्तलम्पट एदं पञ्जरमुद्घाट्य दुष्टवानरोऽतिक्रान्त, एषा खलु मेधाविनी उड्डीना अन्यतो गच्छति, तस्मादागच्छ लघु अनुसरामः, इमस्यालापस्य गृहीताक्षरा कस्यापि पुरतो मन्त्रयिष्यति।

(२) सखि एवं कुर्मः।

(३) होही भोः आश्चर्यं आश्चर्यं।

(४) सुसङ्गते, ज्ञायते कथं पुनरपि एष दुष्टवानर एवागच्छति।

(५) अयि कातरे, न बिभेहि, भर्तुः पार्श्ववर्त्ती खलु एष आर्य्य वसन्तकः।

वस। हीही भोः अचरिअं, अचरिअं! साऊ रे सिरिखण्डदास धम्मिअ, साऊ। (१)

राजा॥ सस्पृहमवलोकयति॥

सुसं। सहि किं एदिणा दिट्ठेण दूरीभूता क्खु सारिआ, ताएहि, अणुसरेम्ह। (२)

वस। साऊ रे सिरिखण्डदास धम्मिअ, साऊ; जेण दिणमेत्तेण एव्व तेण दोहदएण ईदिसी णोमालिआ सम्वुत्ता, जेण णिरन्तरुब्भिण्ण कुसुमगुच्छसोभिअविडवा उवहसन्तीविअ लक्खीअदि, देवीपरिग्गहिदं। माहवीलदं ता जाव गदुअ, पिअवअस्सस्स णिवेदेमि॥ परिक्रम्या वलोक्य च॥ एसो क्खु पिअवअस्सो तस्स दोहदस्स लद्धपच्चअदाए परोक्खं पितं णोमालिअं पच्चक्खंविअ कुसुमिदं पेक्खन्तो, हरिसुफुल्ललोअणो इदो एव्व आअच्छदि। ता जाव णं उपसप्पामि। (३)

॥ इति राजानं प्रति निर्गतः॥

---

(१) हीही भोः आश्चर्यं आश्चर्यं साधु रे श्रीखण्डकदास धार्म्मिक साधु।

(२) सखि किमेतेन दृष्टेन दूरीभूता खलु सारिका, तस्मादागच्छ अनुसरामः।

(३) साधु रे श्रीखण्डदास धार्म्मिक साधु, येन दत्तमात्रेणैव तेन दोहदकेन ईदृशी नवमालिका संवृत्ता येन निरन्तरोद्भिन्नकुसुमगुच्छ शोभितविटपा उपहसन्तीव लक्ष्यते। देवीपरिगृहीतां माधवीलतां तस्मा द्यावत् गत्वा प्रियवयस्यस्य निवेदयामि। एष खलु प्रियवयस्यस्तस्य दोहदकस्य लब्धप्रत्ययतया परोक्षमपि तां नवमालिकां प्रत्यक्षामिव कुसुमितां पश्यन्, हर्षप्रफुल्ललोचनइतएवागच्छति। तद्यावदुपसर्पाम्येनं।

॥ ततः प्रविशति यथानिर्द्दिष्टो राजा ॥

राजा ॥ सहर्षं ॥

उद्दामोत्कलिकां, विपाण्डुररुचं, प्रारब्धजृम्भां, क्षणा
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां, समदनां नारीमिवान्यां, ध्रुवं,
पश्यन् कोपविपाण्डुरप्रतिमुखं देव्याः करिष्याम्यहं ।

विदूषकः ॥ सहर्षोपसृत्य ॥ जअदु जअदु पिअवअस्सो।भो वअस्स, दिट्ठिआ वड्ढसि जेण॥ दिट्ठेत्यादीति पुनः पठति ॥ (१)

राजा । वयस्य, कःसन्देहः।अचिन्त्योहि मणिमन्त्रौषधीनां प्रभावः। पश्य । कण्ठे श्रीपुरुषोत्तमस्य समरे दृष्ट्वा मणिं भ्रकुभि
न्नेष्टं मन्त्रबलादसन्ति वसुधामूले भुजङ्गाहताः ।
पूर्वं लक्ष्मणवीरवानरभटाद्ये मेघनादाहताः
पीत्वा ते च महौषधेर्गुणनिधेर्गन्धं पुनर्जीविताः ।

तदादिशय मार्गं, येन वयमद्य तदवलोकनेन चक्षुषः फलमनुभवामः ।

विदू ॥ साटोपं ॥ एदु, एदु, भवं ।

राजा । गच्छाग्रतः ।

॥ उभौ सगर्व्वं परिक्रामतः ॥

विदू ॥ आकर्ण्य, सभयं निवृत्य, राजानं गृहीत्वा,ससंभ्रमं ॥ भो वयस्स,एहि,पलाअम्ह । (२)

---

(१) जयतु जयतु प्रियवयस्यो,भो वयस्य,दिष्ट्या वर्द्धसे येन दृष्टमा देणेत्यादि ।

(२) भो वयस्य,एहि,पलायावहे ।

राजा । किमर्थं ?

विदू । भो, एअस्सिं वउलपादवे कोवि भूदो पडिवसदि । ( १ )

राजा । धिङ्मूर्ख ; विस्रब्धं गम्यतां कुत इदृशानामत्र प्रभावः ।

विदू । फुडक्खरं एव्वं मन्तेदि ; जइ मम वअणं ण पतिआअसि, ता अग्गदो भविअ, सअं एव्व आअणहि । ( २ )

राजा ॥ तथा कृत्वा श्रुत्वा च ॥

स्पष्टाक्षरमिदं तावन्मधुरं स्त्री स्वभावतः,

अल्पाङ्गत्वादनिर्ह्रादि मन्ये वदति सारिका ।

॥ ऊर्ध्वं निरूप्य स्मितं कृत्वा ॥ सारिकेयं ।

विदू ॥ ऊर्ध्वं निरूप्य ॥ कधं, सचं एव्व सारिआ ? ( ३ )

राजा ॥ विहस्य ॥ एवं ।

विदू । भो वअस्स,तुमं भआलुआ, जेण सारिअं भूदेत्ति मन्तेसि ।(४)

राजा । धिङ्मूर्ख यदात्मकृतं तन्मयि सम्भावयसि ।

विदू । भो,जइ एव्वं मा क्खु मे णिवारेसि ॥ सरोषं दण्डकाष्ठमुद्यम्य ॥ आ दासिए सारिए, तुमं जाणासि सअं एव्वं वह्मणो भाअदित्ति ; ता इमिणा पिसुणजणहिअअकुडिलेण दण्डअट्ठेण, परिपक्क विअ

---

(१) अस्मिन् बकुलपादपे, कोपि भूतः प्रतिवसति ।

(२) स्फुटाक्षरमेव मन्त्रयति; यदि मम वचनं न प्रत्येषि, तदग्रो भूत्वा, स्वयमेव तावदाकर्णय ।

(३) कथं, सत्यमेव सारिका ?

(४) भो वयस्य त्वं भीरुः येन सारिकां भूतइति मन्यसे ।

कइत्यफलं, इमादो वउलपादवादो आहणिअ,पाडइस्सं। ( १ ) ॥ इति हन्तुमुद्यतः ॥

राजा ॥ निवारयन् ॥ मूर्ख, श्रूयतां ; किमप्येषा रमणीयं व्याहरति, तत्किमेनां त्रासयसि ॥ उभावाकर्णयतः ॥

विदू। एवं भणादि इमस्स वह्मणस्स भोजनं दिज्जे इति। ( २ )

राजा। सर्व्वमप्यौदरिकस्याभ्यवहार एव पर्य्यवस्यति; तत्सत्यं वद किमालपति सारिका।

विदू ॥ आकर्ण्य ॥ एवं भणादि; सहि, कीस तुए एत्थ चित्तफलए अहं आलिहिदा? सहि मा कुप्प मा कुप्प, जादिसो तुए कामदेवो आलिहिदो, तादिसी रदी मए आलिहिदेत्ति; ता भो वयस्स किं णेदं। ( ३ )

राजा ॥ वयस्य, एवं तर्कयामि; कयापि हृदयवल्लभोऽनुरागादभिलिख्य कामदेवव्यपदेशेन सखीपुरतो अपह्नुतः, तत्सख्या अपि प्रत्यभिज्ञाय वैदग्ध्यादसावपि तथैव रतिव्यपदेशेन आलिखितेति।

---

( १ ) भो, यद्येवं तदा मा खलु मां निवारयसि। अरे दासि सारिके, जानासि सत्यमेव ब्राह्मणो बिभेति, अनेन पिशुनजनहृदयकुटिलेन दण्डकाष्ठेन,परिपक्कमिव कपित्थफलं, अस्मात् वकुलपादपात् आहत्य, पातयिष्यामि।

( २ )एवं भणति, इमस्य ब्राह्मणस्य भोजनं देहीति।

( ३ ) एवं भणति, सखि कथं त्वयात्र चित्रफलकेऽहमालिखिता? सखि,मा कुप्य,माकुप्य, यादृशस्त्वया कामदेव आलिखितस्तादृशी रतिर्मया आलिखिता इति; तस्मात् भो वयस्य किं नु इदं।

विदू । भो वअस्स, जुज्जदि, जुज्जदि । ( १ )

राजा । भो वयस्य, तूष्णीं भव; पुनरपि व्याहरति; तच्छृणुवस्तावत् ॥

उभावपि शृणुतः ॥

विदू । भो वअस्स,एव्वं भणादि । सहि,मा लज्ज,ईदिसस्स कण्णारअणस्स ईदिसे वरे अभिलासेण होदव्वं । ( २ )

राजा । अस्ति काचिद्युक्तिः ।

विदू । भो वअस्स,मा पण्डिअगव्वं उव्वह; अहं दे एदाए मुहादो सुणिअ,सव्वं वाक्खाणइस्सं;जा एसा आलिहिदा सा कण्णा दंसणीआ ।(३)

राजा । वयस्य, यद्येवमवहितैरेव श्रोतव्यं अस्त्यवकाशो नः कुतूहलस्य ।

विदू । भो वअस्स, सुदं तुए,जं एदाए मन्तिदं ? सहि अवणेहि मे इमाइं णलिणीपत्ताइं, मुणालिआवलआइं अ;कीस अआरणे अत्ताणं आआसेसि । ( ४ )

---

( १ ) भो वयस्य, युज्यते, युज्यते ।

( २ ) भो वयस्य, एवं भणति । सखि,मा लज्ज, ईदृशस्य कन्यारत्नस्य ईदृशवरे अभिलाषेण भवितव्यं ।

( ३ ) भो वयस्य,मा पाण्डित्यगर्व्वमुद्वह; अहं ते एतस्यामुखात् श्रुत्वा, सर्व्वं व्याख्यास्यामि; या एषा आलिखिता सा कन्या दर्शनीया ।

( ४ ) भो वयस्य, श्रुतं त्वया यदेतया मन्त्रितं, सखि ? अपनय मे नलिनीपत्राणि,मृणालिकावलयानि च; किमकारणमात्मानमायासयसि ।

राजा। वयस्य, न केवलं श्रुतमभिप्रायोऽपि बुद्धः।

विदू। भो, अज्जवि कुरुकुराअदि एव्वं एसा सारिआ, दासीए धीआ, ता सव्वं सुणिअ, वक्खाणइस्सं। ( १ )

राजा। युक्तमभिहितं ॥ पुनराकर्णयतः ॥

विदू। भो वअस्स, एसा क्खु, सारिआ, दासीए दुहिदा, चउव्वेदी बम्हणोविअ, रिचाइं भणिदुं पउत्ता। ( २ )

राजा। वयस्य, कथय किमप्यन्यचेतसा मया नावधारितं, किमनयोक्तमिति।

विदू। भो एव्वं भणादि ॥ दुबेहति पुनः पठनीयं ॥

राजा। वयस्य, एवम्विधं भवन्तं ब्राह्मणं मुक्ता, कोऽन्य एवम्विधानामृचामभिज्ञः।

विदू। तदो किं णु एदं? ( ३ )

राजा। ननु गाथिकेयं।

विदू। किं गाथिआ, तदा किं कहिआ? ( ४ )

---

( १ ) भो, अद्यापि कुरुकुरायत्येव एषा सारिका, दास्याः पुत्री, तस्मात् सर्वं श्रुत्वा, व्याख्यास्यामि।

( २ ) भो वयस्य, एषा खलु सारिका दासीदुहिता, चतुर्व्वेदी ब्राह्मणइव ऋचः पठितुं प्रवृत्ता।

( ३ ) तदा किं नु इदं?

( ४ ) किं गाथिका, तदा किं कथ्यतां?

राजा। वयस्य, कयापि श्लाघ्ययौवनया प्रियतममनासादयन्त्या जीवितनिरपेक्षयोक्तं।

विदू॥ उच्चैर्विहस्य॥ भो, किं एदेहिं वक्कभणिदेहिं? उजुअं एव्व किं ण भणासि,जह मं एव्व अणासाअअन्तीए त्ति? अण्णहा,को अण्णो कुसुमचावव्ववदेसेण णिह्नवीअदि॥ हस्ततालं दत्वा उच्चैर्विहसति॥ (१)

राजा॥ ऊर्ध्वमवलोक्य॥ धिङ्मूर्ख,किमुच्चैर्विहसता त्वया त्रासितेयं;येनोड्डीय अन्यत्र क्वापि गता इति॥ निरूपयतः॥

विदू॥ विलोक्य॥ एसा कअलीघरं एव्व गदा,ता एहि अणुसरेम्ह॥ इति परिक्रामतः॥ (२)

राजा। दुर्व्वारां कुसुमशरव्यथां वहन्त्या
तन्वङ्ग्या यदभिहितं पुरः सखीनां,
यद्भूयः शिशुशुकसारिकाभिरुक्तं,
धन्यानां श्रवणपथातिथित्वमेति।

विदू। भो वअस्स, एदं क्खु कअलीघरअं जाव पविसम्ह॥ इति प्रविशतः॥ (३)

---

(१) भोः किमेतैर्व्वक्रभणितैः? ऋजुकमेव किं न भणसि, यथा मामिवानासादयन्त्या इति,अन्यथा कोऽन्यःकुसुमचापव्यपदेशेन निह्नूयते,

(२) एषा कदलीगृहमेव गता, तस्मादागच्छ अनुसरामः।

(३) भो वयस्य, इदं खलु कदलीगृहं, यावत् प्रविशाम।

विदू। किं एदाए दासीए धीआए सारिआए? इह दाव मन्दमारुदुव्वेलन्तवालकअलीदलसीअले सिलातले उपविसिअ, मुहुत्तअं वीसमह्म। (१)

राजा। यदभिरुचितं भवते ॥ इत्युपविशतः ॥

राजा। दुर्वारामिति पुनः पठति ॥

विदू ॥ पार्श्वतोऽवलोक्य ॥ भो वअस्स,एदेण उग्घाडिअदुवारेण दुट्ठवाणरेण,ताए सारिआए पञ्जरेण होदव्वं। (२)

राजा। वयस्य, निरूप्यतां।

विदू। जं भवं आणवेदि ॥ परिक्रम्यावलोक्य च ॥ एसो चित्तफलओ। जाव णं गेह्णामि ॥ गृहीत्वा निरूप्य च सहर्षं ॥ भो वअस्स, दिट्ठिआ वड्ढसि। (३)

राजा। सकौतुकं ॥ वयस्य किमेतत्?

विदू ॥ भो, एदं तं जं मए भणिदं; तुमं जेव्व एत्थ आलिहिदो; अण्णहा को अण्णो कुसुमचावव्ववदेसेण णिह्नवीअदि त्ति। (४)

---

(१) किमेतया दास्याः पुत्र्या सारिकया? इह तावन्मन्दमारुतान्दोलबालकदलीशीतले शिलातले उपविश्य, मुहूर्त्तं विश्राम्याम।

(२) भो वयस्य, एतेनोद्घाटितद्वारेण दुष्टवानरेण तस्याः सारिकायाः पञ्जरेण भवितव्यं।

(३) एष चित्तफलकः; तद्गृह्णामि। भो वयस्य, दिष्ट्या वर्द्धसे।

(४) इदं तत् यन्मया भणितं; त्वमेवात्रालिखितः; अन्यथा कोऽन्यः कुसुमचापव्यपदेशेन निह्नूयते।

राजा ॥ सहर्षं हस्तौ प्रसार्य्य ॥ सखे, समर्पय।

विदू। ण दे दंसइस्सं। सावि कस्सआ एत्थ एव्व आलिहिदत्ति, किं पारितोसिएण विणा ईदिसं कस्सारअणं दंसोअदि? (१)

राजा ॥ कटकमर्पयन्नेव बलाद्गृहीत्वा पश्यति ॥ विलोक्य सविस्मयं॥ वयस्य, पश्य,

लीलावधूतपद्मा कथयन्ती पक्षपातमधिकन्नः,
मानसमुपैति, केयं चित्रगता राजहंसीव।

अपिच। विधायापूर्व्वपूर्णेन्दुमस्या मुखमभ्दुतं,
धाता निजासनाम्भोजविनिमीलनदुःस्थितः।

॥ ततः प्रविशति सुसङ्गता सागरिका च ॥

सुसं। ण समासादिदा अह्मेहिं सारिआ; ता चित्तफलअंपि दाव इमादो कअलीहरादो गेह्निअ, लहुं आगच्छह्म। (२)

साग। सहि, एव्वं करेह्म (३) ॥ इत्युपसर्पतः ॥

विदू। भो वअस्स, कीस उण सा ओणअमुही आलिहिदा। (४)

---

(१) न ते दर्शयिष्यामि। सापि कन्यका अत्रालिखिता। तत् किं पारितोषिकेण विना ईदृशं कन्यारत्नं दर्श्यते?

(२) न समासादिता अस्माभिः सारिका; तस्माच्चित्तफलकमपि अस्मात् कदलीगृहात् गृहीत्वा, लघु आगच्छामि।

(३) सखि, एवं कुर्म्मः।

(४) भोः, कथमेषा अवनतमुखी आलिखिता?

सुसं॥ आकर्ण्य ॥ सहि,जहा वसन्तओ मन्तेदि तहा तक्केमि भट्टिणावि एत्थ एव्व होदव्वं; ता कअलीहरगुम्मन्तरा भविअ, पेक्खह्म ॥(१)

॥ इत्युभे आकर्णयतः ॥

राजा। वयस्य, पश्य, पश्य। विधायापूर्व्वपूर्णेन्दुमित्यादि पुनः पठति ॥

सुसं। सहि,दिट्ठिआ वड्ढसे,एसो दे वल्लहो,तुमं एव्व वण्णेदि। (२)

साग। सहि, कीस परिहाससीलदाए इमं जनं लहुं करेसि ? ( ३ )

विदू ॥ राजानं चालयित्वा ॥ णं भणामि,कीव एसा अवणदमुही आलिहिदा ? ( ४ )

राजा। वयस्य,सारिकयैव सकलमावेदितं।

सुसं। सहि, दंसिदं सारिआए अत्तणो मेहावित्तणं। ( ५ )

विदू। अवि सुहाअदि दे लोअणं णवेत्ति ? ( ६ )

---

(१) सखि,यथा वसन्तको मन्त्रयति,तथा तर्कयामि भर्त्तापि इहैव भवितव्यं ; तस्मात् कदलीगृहगुल्मान्तरिता भूत्वा, पश्याव।

(२) सखि दिष्ट्या वर्द्धसे,एष ते वल्लभस्त्वामेव वर्णयति।

(३) सखि,किं परिहासशीलतया इमं जनं लघुं करोषि ?

(४) ननु भणामि,कथमेषावनतमुखी आलिखिता ?

( ५ ) सखि, दर्शितं सारिकया आत्मनो मेधावित्वं।

( ६ ) अपि सुखायते ते लोचनं नवेति ?

साग ॥ स्वगतं ॥ किं एत्थ भणिस्सदि? अं सचं एव्व मरणजीविदाणं अन्तरे वट्टामि।(१)

राजा। वयस्य, सुखयतीति, किमुच्यते;

स्तक्राद्दूरयुगं व्यतीत्य, सुचिरं भ्रान्त्वा नितम्बस्थले,
मध्येऽस्यास्त्रिवलीतरङ्गविषमे निष्पन्दतामागता,
मद्दृष्टिस्तृषितेव सम्प्रति शनैरारुह्य तुङ्गौ स्तना,
साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने।

सुसं। सहि, सुदं तुए? (२)

साग। तुमं एव्व सुणु, जाए आलेक्खविण्णासो वण्णीअदि। (३)

विदू ॥ फलकं निर्वर्ण्य ॥ भो वअस्स, जस्स उण ईदीसोवि एव्वं पिअसमागमं बहु मण्णन्ति, तस्सवि उवरि अत्तणो को पराहओ, जेण एत्यएव्व ताए आलिहिदं अत्ताणअं ण पेक्खसि।(४)

राजा ॥ निर्वर्ण्य ॥ वयस्य अनया लिखितोऽहमिति यत्सत्यमात्मन्येव बहुमानः तत्कथं न पश्यामि?

---

(१) किमत्र भणिष्यति; यत्सत्यमेव मरणजीवितयोरन्तरेऽहं वर्त्ते।

(२) सखि, श्रुतं त्वया?

(३) त्वमेव शृणु, यस्या आलेख्यविन्यासो वर्ण्यते।

(४) भो वयस्य यस्य ईदृशोऽपि एवं प्रियसमागमं बहु मन्यन्ते, तस्य ते आत्मनउपरि कः पराभवः, येन इहैव तया आलिखितं आत्मानं न पश्यसि।

पश्य ; भाति पतितो लिखन्त्यास्तस्या वाष्पाम्बुशीकरकणौघः,
खेदोद्गमइव करतलसंस्पर्शादेष मे वपुषि।

साग ॥ आत्मगतं ॥ हिअअ समस्सस, समस्सस, मणोरहोवि दे एत्तिअं भूमिं गदो ( १ )

सुसं। सहि,तुमं एव्व धणा,सलाहणीआ अ,जाए भट्टा एव्वं सन्तोसीअदि।( २ )

विदू ॥ पार्श्वतोऽवलोक्य ॥ भो वअस्स,एदं अवरं सरसकमलिणीदलमुणालविरइदं इमाए एव्व मअणावत्थासूअअं लक्खीअदि।( ३ )

राजा। वयस्य, निपुणमुपलक्षितं। तथाहि ;
परिम्लानं पीनस्तनजघनसङ्गादुभयत
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितं।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः,
कृशाङ्ग्याः सन्तापं वदति नलिनीपत्रशयनं।

---

( १ ) हृदय समाश्वसिहि,समाश्वसिहि,मनोरथोऽपि ते एतावतीं भूमिं गतः।

(२ ) सखि, त्वमेव धन्या,श्लाघनीया च,यस्यै भर्त्ता एवं सन्तोषयति।

(३) भो वयस्य, इदमपरं सरसकमलिनीदलमृणालविरचितं अस्या एव मदनावस्थासूचकं लक्ष्यते।

अपिच। स्थितमुरसि विशालं पद्मिनीपत्रमेतत्
कथयति न तथान्तर्मन्मथोत्थामवस्थां ?
अतिशयपरितापम्लापिताङ्ग्या यथास्याः
स्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति।

विदू ॥ नाथिन मृणालिकां गृहीत्वा ॥ भो वअस्स, अअं क्खु उअअदो अवरो ताए एव्व पीणत्थणहरकिलम्मन्तकोमलमुणालहारो, ता पेक्खदु भवं। (१)

राजा ॥ गृहीत्वोरसि विन्यस्य ॥ अयि जडप्रकृते,
परिच्युतस्तत्कुचकुम्भमध्यात्किं शोषमायासि मृणालहार;
न सूक्ष्मतन्तोरपि तावकस्य तत्रावकाशो भवतः कथं स्यात्।

सुसं ॥ आत्मगतं ॥ हद्धी,हद्धी, गुरुआणुराअक्खित्तहिअओ भट्टा असम्बद्धं मन्तिदुं पउत्तो, ता अदो अवरं उण ण जुत्तं अपेक्खिदुं दाव ॥ प्रकाशं ॥ सहि, जस्स किदे तुमं आअदा,सो अअं दे पुरदो चिट्ठदि। (२)

---

(१) भो वयस्य, अयं खलूपगतोऽपरस्तस्या एव पीनस्तनभरक्लिश्यत्कोमलमृणालहारः तत् पश्यतु भवान्।

(२) हा धिक्, हा धिक्, गुरुकानुरागक्षिप्तहृदयो भर्त्ता असम्बद्धं मन्त्रयितुं प्रवृत्तः। तस्मादतोऽपरं पुनर्न युक्तमपेक्षितुं तावत्। सखि यस्य कृते त्वमागता,सोऽयं ते पुरतस्तिष्ठति।

सुसं। प्रसणो मे भट्टा।अलं सङ्काए। एदिणा भट्टिणो पसाएण मए कीलिदं एव्व,ता किं कण्णाहरणेण? एसोएव्व मे गरुओ पसाओ। जं कीस तुए एत्थ चित्तफलए अहं आलिहिदेत्ति कुविदा मे पिअसही साअरिआ। चिट्ठदि ता गदुअ एसा पसादीअदु। ( १ )

राजा ॥ ससंभ्रममुत्थाय ॥ कासौ? दर्शय, दर्शय।

विदू। भो गेह्णामि एदं चित्तफलअं,कदावि इमिणा पुणोवि कज्जं होदि। ( २ )

सुसं। इदो इदो भट्टा॥ सर्व्वः कदलीगृहान्निष्क्रान्तः॥

साग॥ राजानं दृष्ट्वा,सहर्षं ससाध्वसं सकम्पञ्च स्वगतं॥ एणं पेक्खिअ, अदिसद्धसेण ण सक्कणोमि पदादो पदंवि गन्तुं।ता किं वा एत्थ करिस्सं? ( ३ )

विदू॥ सागरिकां दृष्ट्वा॥ हीही भो अच्चरीअं अच्चरीअं। इदिसं कण्ण आरअणं माणुसलोए ण दीसदि।ता तक्केमि पआवदणोवि एद णिम्माविअ विम्हओ समुप्पणो ( ४ )

---

(१) प्रसन्नो मे भर्त्ता। अलं शङ्कया। एतेन भर्त्तुः प्रसादेन मया क्रीडितमेव,तस्मात् किं कर्णाभरणेन? एषएव मे गुरुः प्रसादः,यत्कथं त्वया अत्र चित्रफलकेऽहमालिखितेति कुपिता मे प्रियसखी सागरिका तिष्ठति तस्मात् गत्वा, एषा प्रसाद्यतां।

(२) भो गृह्णामि इदं चित्रफलकं, कदापि अमुना कार्य्यं भवति।

( ३ ) एनं प्रेक्ष्य, अतिसाध्वसेन न शक्नोमि पदादपि पदं गन्तुं, तत् किम्वात्र करिष्यामि?

( ४ ) आश्चर्य्यमाश्चर्य्यं ईदृशं कन्यारत्नं मानुषलोके न दृश्यते तस्मात्

राजा। वयस्य, ममाप्येवं मनसि वर्त्तते ;

दृशः पृथुतरीकृता जितनिजाब्जपत्रत्विष

श्चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतं ;

शिरांसि चलितानि विस्मयवशाद्ध्रुवं वेधसो,

विधाय ललनां जगत्त्रयललामभूतामिमां।

साग॥ सासूयं सुसङ्गतामालोक्य॥ सहि, ईदिसो चित्तफलओ तुए

आणीदो।(१) इति गन्तुमिच्छति।

राजा। दृष्टिं त्वया क्षिपसि, भामिनि, यद्यपीमां,

स्निग्धेयमेष्यति तथापि न रूक्षभावं।

त्यक्ता त्वरां, व्रज पदे. स्खलितैरयन्ते

खेदं गमिष्यति ममाद्य गुरुनितम्बः।

सुसं। भट्टा, अदिकोपणा क्खु, एसा,ता अग्गहत्थेण गेह्निअ, पसा

देहि णं।(२)

राजा॥ सानन्दं॥ यथाह भवती॥ सागरिकां हस्ते गृहीत्वा स्पर्शसुखं

नाटयति॥

---

तर्कयामि प्रजापतेरपि इदं निर्म्माय विस्मयः समुत्पन्नः।

(१) सखि ईदृशश्चित्रफलकस्त्वया आनीतः।

(२) राजन्, अतिकोपना एषा, तस्मादग्रहस्तेन गृहीत्वा प्रसा

दयैनां।

विदू। भो एसा क्खु तुए अपुव्वा सिरी समासादिदा। ( १ )

राजा। वयस्य, सत्यं ;

( ७ ) श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः ;

कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः ?

सुसं। सहि, अदक्खिणासि तुमं दाणिं, जा एव्वं भट्टिणा हत्थेण गहिदावि कोवं न मुञ्चसि। ( २ )

साग॥ सभ्रूभङ्गं॥ सुसङ्गदे, अज्जवि ण विरमसि ? ( ३ )

राजा। अयि न खलु सखीजने युक्तमेव कोपानुबन्धं कर्तुं।

विदू। भोदि, बुभुक्खिदो वह्मणोविश्र किं कुप्पसि। ( ४ )

सुसं। सहि, तुए सह ण वालइस्सं। ( ५ )

राजा। अयि कोपने, नैतद्युक्तं समानप्रतिपत्तिषु सखीषु।

विदू। भो,एसा क्खु अवरा देवी वासवदत्ता। ( ६ )

---

( १ ) भो एषा खलु त्वया अपूर्व्वा श्रीः समासादिता।

( २ ) सखि,अदक्षिणा इदानीमसि त्वं, या एवं भर्त्रा हस्तेनावलम्बितापि कोपं न मुञ्चसि।

( ३ ) अयि सुसङ्गते, अद्यापि न विरमसि ?

( ४ ) भवति, बुभुक्षितो ब्राह्मणइव किं कुप्यसि।

( ५ ) सखि, त्वया सह न वक्ष्यामि।

( ६ ) भो एषा खलु अपरा देवी वासवदत्ता।

राजा ॥ सचकितं सागरिकाया हस्तं मुञ्चति ॥

साग । सुसङ्गदे, किं दाणिं करिस्सं ? ( १ )

सुसं । सहि, एदं तमालविडपं अन्तरीअ इदो णिक्कमह्म । ( २ )

॥ इति निष्क्रान्ते ॥

राजा । पार्श्वतोऽवलोक्य सविस्मयं ॥ क्वासौ देवी वासवदत्ता ?

विदू । भो,मा णं एदं; मए एसा क्खु अवरा देवी वासवदत्ता अदि दीहरोसदाएत्ति भणिदं । ( ३ )

राजा । धिङ्मूर्ख !

प्राप्ता कथमपि दैवात्कण्ठमनीतैव सा प्रकटरागा ।

रत्नावलीव कान्ता मम हस्तात् भ्रंशिता भवता ।

॥ ततः प्रविशति वासवदत्ता काञ्चनमाला च ॥

वास । हञ्जे कंचणमाले, अह केत्तिअदूरे दाणिं अज्जउत्तेण परिगहिदा णोमालिआ ? ( ४ )

काञ्च । एदं कअलीघरं अदिक्कमिअ दीसदि । ( ५ )

---

( १ ) सुसङ्गते, किमिदानीं करिष्यामि ?

( २ ) सखि, इदं तमालविटपमन्तरयित्वा इतो निष्क्रमामः ।

( ३ ) भो, मा ननु इदं; मया एषा खलु अपरा देवी वासवदत्ता अति दीर्घरोषतयेति भणितं ।

( ४ ) सखि काञ्चनमाले, अथ कियद्दूरे इदानीं सा आर्य्यपुत्रेण परिगृहीता नवमालिका ?

( ५ ) इदं कदलीगृहमतिक्रम्य दृश्यते ।

वास। तेण तहिं जेव्व गच्छह्म। (१)

काञ्च। एदु एदु भट्टिणी ॥ परिक्रामति ॥ (२)

राजा। वयस्य, केदानीं प्रियतमा द्रष्टव्या ?

काञ्च। भट्टिणि, जह समीपे भट्टा मन्तेदि, तह तक्केमि भट्टिणीं एव्व पडिवालअन्तो चिट्ठदि, ता उपसप्पदु भट्टिणी। (३)

वास ॥ उपसृत्य ॥ जअदु, जअदु, अज्जउत्तो। (४)

राजा ॥ अपवार्य्य ॥ वयस्य, प्रच्छादय चित्रफलकं।

विदू ॥ गृहीत्वा कक्षे निक्षिपति ॥

वास। अज्जउत्त, कुसुमिदा णोमालिआ ? (५)

राजा ॥ सविस्मयं ॥ देवि, प्रथममागतैरस्माभिस्त्वं चिरयसीति न दृष्टा; तदेहि, सहैतावेव तां पश्यावः।

वास ॥ निर्व्वर्ण्य ॥ अज्जउत्तमुहाणुरागादो एव्व मए जाणिदं जहा कुसुमिदा णोमालिआत्ति; ता ण गमिस्सं। (६)

---

(१) तेन तत्रैव गच्छामः।

(२) एतु, एतु भर्त्री।

(३) भर्त्रि, यथा समीपे भर्त्ता मन्त्रयति, तथा तर्कयामि भर्त्रीमेव परिपालयंस्तिष्ठति, तस्मादुपसर्पतु भर्त्री।

(४) जयतु, जयतु, आर्य्यपुत्त्रः।

(५) आर्य्यपुत्त्र, कुसुमिता नवमालिका ?

(६) आर्य्यपुत्त्रमुखानुरागादेव मया ज्ञातं यथा कुसुमिता नवमालिकेति, न गमिष्यामि।

विदू। भोदि, जइ एव्वं, ता जिदं अम्हेहिं। (१)

॥ इति बाहू प्रसार्य्य नृत्यति कक्षात्पतितं फलकं दृष्ट्वा विषादं नाटयति ॥

राजा॥ अपवार्य्य अङ्गुल्या दर्शयन् वसन्तकमुखं पश्यति॥

विदू॥ अपवार्य्य॥ भो भो, मा कुप्प, एत्थ जाणिस्सं। (२)

काञ्च॥ फलकं गृहीत्वा॥ भट्टिणि, पेक्ख दाव, किं एत्थ चित्तफलए आलिहिदं? (३)

वास॥ निर्वर्ण्य स्वगतं॥ अम्म अज्जउत्त, इयं उण साअरिआ॥ प्रकाशं राजानं प्रति॥ अज्जउत्त, किं एदं? (४)

राजा॥ सवैलक्ष्यस्मितं अपवार्य्य॥ वयस्य, किं ब्रवीमि?

विदू॥ भो, मा चिन्तेहि, अहं उत्तरं दाइस्सं॥ प्रकाशं वासवदत्तां प्रति॥ भोदि, अप्पा किल दुक्खेण आलिहीअदित्ति मम वअणं सुणिअ, पिअवअस्सेण एदं विण्णाणं दंसिदं। (५)

राजा। यथाह वसन्तकस्तथैवैतत्।

---

(१) भवति, यद्येवं, तदा जितमस्माभिः।

(२) भो, भो मा कुप्य अत्र ज्ञास्यामि।

(३) भर्त्रि, पश्य तावत्, किमत्र चित्रफलके आलिखितं?

(४) अयमार्य्यपुत्त्रः, इयं पुनः सागरिका। आर्य्यपुत्त्र किमिदं?

(५) भो, मा चिन्तय, अहमुत्तरं दास्यामि। आत्मा खलु दुःखेना लिख्यत इति मम वचनं श्रुत्वा, प्रियवयस्येन इदं विज्ञानं दर्शितं।

वास ॥ फलकं निर्दिश्य ॥ अज्जउत्त, एमावि जा अवरा तुह समीवे आलिहिदा ता किं अज्ज वसन्तअस्स विसाणं । (१)

राजा ॥ सवैलक्ष्यस्मितं ॥ अलमनया शङ्कया; इयं हि स्वचेतसैव परिकल्प्य लिखिता, न तु दृष्टपूर्व्वा ।

विदू । सच्चं सवामि वम्हसुत्तेण, जइ कदापि अह्मेहिं ईदिसी दिट्ठपूव्वा । (२)

काञ्च ॥ अपवार्य्य ॥ भट्टिणि कदावि ईदिसं उण घुणक्खरं सम्भदि जेव्व, ता अलं कोवेण । (३)

वास । अइ उजुए, एदस्स वक्रभणिदाइं ण आणासि; वसन्तओ क्खु एसो ॥ प्रकाशं राजानं प्रति ॥ अज्जउत्त, मम उण एदं चित्तं पेक्खन्तीए सीसवेअणा समुप्पणा, ता सुहं चिट्ठदु अज्जउत्तो, अहं गमिस्सं (४) ॥ इत्युत्थाय गच्छति ॥

---

(१) आर्य्यपुत्र, एषापि या अपरा तव समीपे आलिखिता, तत् किमार्य्यवसन्तकस्य विज्ञानं ।

(२) सत्यं शपामि ब्रह्मसूत्रेण, यदि कदापि अस्माभिरीदृशी दृष्टपूर्व्वा ।

(३) भर्त्रि, कदापि ईदृशं पुनर्घुणाक्षरं संवदत्येव तस्मादलं कोपेन ।

(४) अयि ऋजुके, एतस्य वक्रभणितानि न जानासि; वसन्तकः खल्वेषः । आर्य्यपुत्त्र, मम पुनरिदं चित्रं पश्यन्त्याः शिरोवेदना समुत्पन्ना, तस्मात् सुखं तिष्ठतु आर्य्यपुत्त्रोऽहं गमिष्यामि ।

राजा ॥ पटान्तेन गृहीत्वा ॥ देवि,

प्रसीदेति ब्रूयामिदमसति कोपे न घटते,
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ;
न मे दोषोऽस्तीति, त्वमिदमपि चाग्राास्यसि मृषा,
किमेतस्मिन् वक्तुं क्षममिति न वेद्मि प्रियतम ?

वास ॥ सविस्मयं पटान्तमाकर्षन्ती ॥ अज्जउत्त, मा अणधा संभावेहि ; सच्चं एव्व मं सीसवेअणा बाधेदि ; ता गमिस्सं । ( १ )

॥ इति निष्क्रान्ते ॥

विदू । भो, दिट्ठिआ वड्ढसे, खेमेण अदिक्कन्ता एसा वासवदत्ता, अआलवादालिआ । ( २ )

राजा । धिङ्मूर्ख, अलं परितोषेण, यान्या निगूढो न लक्षितस्त्वया देव्याः कोपानुबन्धः ? पश्य,

भ्रूभङ्गे सहसोद्गतेऽपि, वदनं नीतं परां नम्रता
मीषन्मां प्रतिभेदकारि हसितं, नोक्तं वचो निष्ठुरं ?

---

(१) आर्य्यपुत्र, मा अन्यथा सम्भावय, सत्यमेव मां शीर्षवेदना बाधते ; तस्मादहमियामि ॥

( २ ) भो, दिष्ट्या वर्द्धसे क्षेमेणातिक्रान्ता एषा वासवदत्ता, अकालवादलिका ।

अन्तर्भ्यांप्यजडीकृतं प्रभुतया चक्षुर्न विस्फारितं,
कोपश्च प्रकटीकृतो दयितया, मुक्तश्च न प्रश्रयः ।

तदेहि देवीं प्रसादयितुमभ्यन्तरमेव प्रविशावः ।

॥ इति निष्क्रान्तौ ॥

॥ द्वितीयोऽङ्कः ॥

---

॥ अथ तृतीयोऽङ्कः ॥

॥ ततः प्रविशति मदनिका ॥

मद ॥ आकाशे ॥ कोसम्बिए, अवि दिट्ठा तुए भट्टिणीसआसे कञ्चणमाला णवेत्ति॥ आकर्ण्य ॥ किं भणासि, कोवि कालो ताए आअछिअ गदाएत्ति ; ता कहिं दाणिं पेक्खिस्सं ॥ अयतोऽवलोक्य ॥ कहं एसा क्खु कञ्चणमाला इदोज्जिव्व आअछदि ; ता जाव ण उवसप्पामि। (१)

॥ ततः प्रविशति काञ्चनमाला ॥

काञ्च॥ सोच्छ्वासं ॥ साऊ रे वसन्तअ, साऊ, अदिसइदो तुए अमच्चजोअन्धराअणो इमाए सन्धिविग्गहचिन्ताए। (२)

मद ॥ उपसृत्य ॥ हला कञ्चणमालि, किं अज्जवसन्तएण कदं, जेण सो एव्वं सलाहीअदि। (३)

---

(१) भोः कौशाम्बिके, अपि दृष्टा त्वया भर्त्तुः सकाशे काञ्चनमाला नवेति। किं भणसि; कोऽपि कालस्तया आगत्य गतयेति, तत्कुत्रेदानीं द्रक्ष्यामि। कथमेषा खलु काञ्चनमाला इतएवागच्छति, तद्यावदेनाम् उपसर्पामि।

(२) साधु रे वसन्तक साधु, अतिशयितस्त्वया अमात्ययौगन्धरायणः अनया सन्धिविग्रहचिन्तया।

(३) सखि काञ्चनमालि, किमद्य वसन्तकेन कृतं, येन स एवं श्लाघ्यते।

काञ्च। हला किं तव एदिणा पुच्छिदेण पत्रोत्रणं ; तुमं दमं रहस्सं रक्खिदुं ण पारेसि। ( १ )

मद। सवामि देवीए चरणेहिं, जद कस्सवि पुरदो अ्प्रासेमि ।(२)

काञ्च। जद एत्थं, ता सुणु ; अज्ज क्खु मए राअ्प्रकुलादो पडिणिव त्तमाणाए चित्तसालिआदुवारे वसन्तअस्स सुसङ्गदाए समं आलावो सुदो। ( ३ )

मद ॥ सकौतुकं ॥ सहि, कीदिसो ? ( ४ )

काञ्च। जह, सुसङ्गदे, णहि सारिअं वज्जिअ पिअवअस्सस्स अ्प्रंण किम्पि ऊसत्थदाए कारणं ; ता एत्थ पडिआरं चिन्तेहि। ( ५ )

मद ॥ तदो सुसङ्गदाए किं भणिदं ? ( ६ )

---

( १ ) सखि किं तवैतेन प्रश्नेन प्रयोजनं; त्वमिदं रहस्यं रक्षितुं न पारयसि।

( २ ) शपे देव्याश्चरणैः, यदि कस्यापि पुरतः प्रकाशयामि।

( ३ ) यद्येवं, तदा शृणु, अद्य खलु मया राजकुलात् प्रतिनिवर्त्तमानया चित्रशालिकाद्वारे वसन्तकस्य सुसङ्गतया सह अयमालापः श्रुतः।

( ४ ) सखि, कीदृशः ?

( ५ ) यथा, सुसङ्गते, नहि सागरिकां वर्जयित्वा प्रियवयस्यस्यान्यत् किमपि अ्प्रसुस्थतायाः कारणं ; तदत्र प्रतीकारं चिन्तय।

( ६ ) तदा सुसङ्गतया किं भणितं ?

काञ्च । तदो तार एव्वं भणिदं; अज्ज क्खु देवीए चित्तफलग्न वुत्तन्तसङ्किदाए, सारिआरं मम हत्थे समप्पअन्तोए, अं खेदत्थं मे पमा दोकिदं, तदो तेण एव्व विरइदभट्टिणीवेसं साअरिअं गेह्णिअ, अहम्पि काञ्चणमालावेसधारिणी भविअ, पदोसे अआसं भट्टिणो आगमिस्सं? तुमं पि दुवट्ठिदो जेव्व पडिवालइस्ससि, तदो माहवी लदामण्डवे तार सह भट्टिणो सङ्गमो भविस्सदि। ( १ )

मद। सुसङ्गदे, हदासा क्खु तुमं, जा एव्वं परिअणवच्छलं देवीं वञ्चेसि। ( २ )

काञ्च। हला, दाणिं तुमं कहिं पत्थिदा? ( ३ )

मद। असत्थसरीरस्स भट्टिणो कुसलवुत्तन्तं जाणिदुं गदा, तुमं चिरयसित्ति, उत्तम्मन्तीए देवीए तुह सआसं पेसिदम्हि। (४)

---

(१) तदा तथैवं भणितं; अद्य खलु देव्या चित्रफलकवृत्तान्त श ङ्कितया, सागरिकां मम हस्ते समर्पयन्त्या, यन्नेपथ्यं मे प्रसादी कृतं; ततस्तेनैव विरचितभर्त्रीवेशां सागरिकां गृहीत्वा, अहमपि काञ्चन मालावेशधारिणी भूत्वा, प्रदोषे सकाशं भर्तुरागमिष्यामि; त्वमपीह स्थितएवं मा प्रतिपालयिष्यसि, ततो माधवीलतामण्डपे तया सह भर्तुः समागमो भविष्यति।

( २ ) सुसङ्गते, हताशा खलु त्वं, या एवं परिजनवत्सलां देवीं वञ्चयसि।

( ३ ) सखि इदानीं त्वं कुत्र प्रस्थिता?

( ४ ) असुस्थशरीरस्य भर्तुः कुशलवृत्तान्तं ज्ञातुं गता त्वं, चिर यसीति, उत्ताम्यन्त्या देव्या तव समीपं प्रेषितास्मि।

काय। अदिउजुआ सा देवी, जा एवं पत्तिआअदि॥ परिक्रम्याव लोक्य च॥ कधं एत्थ एसो क्खु भट्टा असत्थदामिसेण अत्तणो मअ णावत्थं पच्छादअन्तो दन्ततोरणवलहीए उवविट्ठो चिट्ठदि; ता एहि, एदं वुत्तन्तं भट्टिणीए णिवेदेम्ह। ( १ )

॥ इति निष्क्रान्ते प्रवेशकः॥

॥ ततः प्रविशति मदनावस्थां नाटयन्नुपविष्टो राजा॥

राजा॥ सोत्कण्ठं निश्वस्य॥

सन्तापो हृदय स्मरानलकृतः सम्प्रत्ययं सह्यतां,
नास्त्येवोपशमो हि, तां प्रति पुनः किं त्वं मुधा ताम्यसि?
यन्मूढेन मया तदा कथमपि प्राप्तो गृहीत्वा चिरं
विन्यस्तस्त्वयि सान्द्रचन्दनरसस्पर्शो न तस्याः करः।

अहो महदाश्चर्यं तथाहि।

मनश्चलं प्रकृत्यैव, दुर्लक्ष्यञ्च तथापि मे,
कामेनैतत्कथं विद्धं समं सर्वैः शिलीमुखैः?

॥ ऊर्ध्वमवलोक्य॥ भोः कुसुमधन्वन्

---

( १ ) अतिऋजुका सा देवी, या एवं प्रत्ययते। कथमत्र एष खलु भर्त्ता अस्वस्थतामिषेण आत्मनो मदनावस्थां प्रच्छादयन् दन्ततोरणवडभ्यामु पविष्टस्तिष्ठति; तस्मादेहि अमुं वृत्तान्तं भर्त्र्यै निवेदयामः।

बाणाः पञ्च मनोभवस्य नियतास्तेषामसंख्यो जनः
प्रायोऽस्मद्विध एव लक्ष्यमिति यल्लोके प्रसिद्धिं गतं ;
दृष्टं तत्त्वयि विप्रतीपमधुना, यस्मादसंख्यैरयं
विद्धः कामिजनः शरैरशरणो नीतस्त्वया पञ्चतां ।

॥ विचिन्त्य ॥ तथाहमेवंविधावस्थमात्मानं नानुचिन्तयामि, यथा व्यक्तगूढकोपसम्भाराया देव्या लोचनगोचरगतां तामेव तपस्विनीं साग रिकां, तथाहि ;

ह्रिया सर्व्वस्याधो नयति विदितास्मीति वदनं,
द्वयोर्दृष्ट्वालापं कलयति कथामात्मविषयां ;
सखीषु स्मेरासु प्रकटयति वैलक्ष्यमधिकं,
प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरा ।

प्रेषितश्च मया तद्वार्त्तान्वेषणाय कथं चिरयति वसन्तकः ।

॥ ततः प्रविशति हृष्टो वसन्तकः ॥

वस ॥ सपरितोषं ॥ हीही भोः, कोसम्बीरज्जलाहेणावि ण तादि सो पिअवअस्सस्स हिअअपरितोसो आसीत्, जादिसो मम सआसादो अज्ज पिअवअणं सुणिअ भविस्सदित्ति तक्केमि ; ता जाव गदुअ पिअव अस्सस्स णिवेदइस्सं ॥ परिक्रम्यावलोक्य च ॥ कथं, एसो पिअवअस्सो जह इमं एव्व दिसं अवलोअन्तो चिट्ठदि, तह तक्केमि मं एव्व पडिवालेदि, ता जाव णं उवसप्पामि ॥ इत्युपसृत्य ॥ जअदु जअदु पिअवअस्सो । भो वअस्स दिट्ठिआ वड्ढसे तुमं समीहिदकज्जसिद्धीए । ( १ )

---

( १ ) कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य हृदयपरितो तोष आसीत्, यादृशो मम सकाशादद्य प्रियवचनं श्रुत्वा भविष्यतीति ; तथा

राजा ॥ सहर्षं ॥ वयस्य, अपि कुशलं प्रियायाः सागरिकायाः?

विदू ॥ भो, अइरेण सअं एव्व पेक्खिअ जाणिस्ससि। (१)

राजा ॥ सपरितोषं ॥ वयस्य, दर्शनमपि भविष्यति प्रियायाः?

विदू। भोः, कीस ण भविस्सदि, जस्स दे उवहसिदविहप्पदिबुद्धि विहवो अहं अमच्चो। (२)

राजा। न खलु चित्रं; किं न सम्भाव्यते त्वयि? तत्कथय, विस्तरतः श्रोतुमिच्छामि।

विदू ॥ कर्णे एवमेवं कथयति॥

राजा ॥ सपरितोषं ॥ वयस्य, इदं ते पारितोषिकं इति ॥ हस्तादव तार्य्य कटकं ददाति ॥

विदू ॥ कटकं परिधाय आत्मानं निर्वर्ण्य ॥ भोदु एव्वं दाव, समुद्दसुद्धसोवण्णकडअमंडिअहत्थं अत्तणो बह्मणीए गदुअ दंस इस्सं। (३)

---

गृहीत्वा प्रियवयस्यस्य निवेदयामि। कथमेष प्रियवयस्यो यथा इमामेव दि शमवलोकयंस्तिष्ठति, तथा तर्कयामि मामेव प्रतिपालयति; तद्यावदेन मुपसर्पामि। जयतु जयतु प्रियवयस्यः। भो वयस्य, दिष्ट्या वर्द्धसे त्वं समी हितकार्य्यसिद्ध्या।

(१) भो, अचिरेण स्वयमेव प्रेक्ष्य ज्ञास्यसि।

(२) भोः, कथं न भविष्यति, यस्य ते उपहसितबृहस्पतिबुद्धिविभवो ऽहममात्यः।

(३) भवत्वित्थं तावत्, समुद्रशुद्धसौवर्णकटकमण्डितहस्तं आत्मनो ब्राह्मण्यै गत्वा दर्शयिष्यामि।

राजा । सखे, पश्चाद्दर्शयिष्यसि ज्ञायतां तावत् किमवशिष्टमह्न इति ।

विदू ॥ परिक्रम्यावलोक्य च सहर्षं ॥ भो:, पेक्ख पेक्ख; एसो क्खु गुरुआणुरात्रक्खित्तहिअओ, सञ्झाबहुदिणसङ्केओ, विअ अत्थगिरिसिहरकाणणमनुसरदि भअवं सहस्सरस्सी । (१)

राजा ॥ विलोक्य सहर्षं ॥ सखे, सम्यगुपलक्षितं पर्य्यवसितमहः ।

तथाहि ।

अध्वानं नैकचक्रः प्रभवति भुवनभ्रान्तिदीर्घं विलङ्घ्य,
प्रातः प्राप्तुं रथो मे पुनरिति मनसि न्यस्तचिन्तातिभारः ;
सन्ध्याकृष्टावशिष्टस्वकरपरिकरस्पष्टहेमारपङ्क्तिं
व्याकृष्यावस्थितोऽस्तचितिभृति नयतीवैष दिक्चक्रमर्कः ।

अपि च । यातोऽस्मि, पद्मनयने, समयो ममैष,
सुप्ता मयैव भवती प्रतिबोधनीया ।
प्रत्यायनामयमितीव सरोरुहिण्याः,
सूर्य्योऽस्तमस्तकनिविष्टकरः करोति ।

तदुत्तिष्ठ; तत्रैव माधवीलतामण्डपे गत्वा, प्रियतमासङ्केतावसरं प्रतिपालयावः ।

---

( १ ) भोः, पश्य पश्य; एष खलु गुरुकानुरागक्षिप्तहृदयः, सन्ध्यावधूदत्तसङ्केतक इवास्तगिरिशिखरकाननमनुसरति भगवान् सहस्ररश्मिः ।

विदू। सोभणं भणिदं ॥ इत्युत्तिष्ठतः ॥

विदू ॥ विलोक्य ॥ भो वअस्स, पेक्ख पेक्ख, एसो क्खु बहलीकिदविरलवणराइमसिविसेसो, गहीदघणपङ्कपीवरवणवराहमहिसकसणच्छवी, पसरदि पुव्वदिसं पच्छादअन्तो तिमिरसंघाओ। (१)

राजा ॥ विलोक्य ॥ वयस्य, सम्यक् दृष्टं। तथाहि;

पुरः पूर्व्वामेव स्थगयति ततोऽन्यामपि दिशं,
क्रमात्क्रामन्नद्रिद्रुमपुरविभागांस्तिरयति;
उपेतः पीनत्वं तदनुभुवनस्येक्षणपथं,
तमःसङ्घातोऽयं हरति हरकण्ठद्युतिहरः।

तदादेशय मार्गं।

विदू। एदु एदु पिअवअस्सो ॥ इति परिक्रामतः ॥

विदू ॥ निरूप्य ॥ भो वअस्स, एदं क्खु समासण्णं वहलपादवदारपिण्डीकदन्धआरंविअ मअरन्दुज्जाणं; ता कधं एत्थ मग्गो लक्खीअदि। (२)

राजा ॥ गन्धमाघ्राय ॥ वयस्य, गच्छायतः, ननु सुपरिज्ञात एवात्र मार्गः।

---

(१) भोः, पश्य पश्य, एष खलु बहलीकृतविरलवनराजिमसिविशेषो गृहीतघनपङ्कपीवरवनवराहमहिषकृष्णसारच्छविः प्रसरति पूर्व्वदिशं प्रच्छादयंस्तिमिरसंघातः।

(२) एतु एतु प्रियवयस्यः। भो वयस्य, इदं समासन्नं वकुलपादपतया पिण्डीकृतान्धकारमिव मकरन्दोद्यानं, तस्मात् कथमत्र मार्गो लक्ष्यते।

तथाहि। पालीयञ्चम्पकानां नियतमयममी सुन्दरः सिन्धुवारः,
मान्द्रा वीथी तथेयं वकुलविटपिनां, पाटला पङ्क्तिरेषा;
आघ्रायाघ्राय गन्धं विविधमधिगतैः पादपैरेवमस्मिन्,
व्यक्तिं पन्थाः प्रयाति द्विगुणतमतमोनिह्नुतोऽप्येष चिह्नैः।

॥ इति परिक्रामतः ॥

विदू। भो, एदं क्खु णिपडन्तमत्तमहुअरवउलकुसुमामोदवासिद दसदिसामुहमसिणमरगअमणिसिलाकुट्टिमसुहाअन्त चरणसञ्चारसूइदं, तं एव्व माहवीलदामण्डवं संपत्तम्ह; ता इह ज्जेव्व चिट्ठदु भवं, जावदहं देवीवेसधारिणीं साअरिअं गेह्णिअ, लहुं आअच्छामि ॥(१)

राजा। वयस्य, तेन हि त्वर्य्यतां।

विदू। वअस्स, मा उत्तम्म एसो आअदोम्हि। (२)

॥ इति निष्क्रान्तः ॥

राजा। तावदहमप्यस्यां मरकतशिलावेदिकायामुपविश्य, प्रियायाः सङ्केतसमयं प्रतिपालयामि ॥ उपविश्य सचिन्तं ॥ अहो, कोऽपि कामिजनस्य स्वगृहिणीसमागमपरिभाविनोऽभिनवजनं प्रति पक्षपातः।

---

(१) भो, इदं खलु निपतन्मत्तमधुकरवकुलकुसुमामोदवासितदशदिङ्मुखमसृणमरकतमणिशिलाकुट्टिमसुखायमानचरण सञ्चारसूचितं, तमेव माधवीलतामण्डपं सम्प्राप्ताः स्मः; तस्मादिहैव तिष्ठतु भवान्, यावदहं देवीवेशधारिणीं सागरिकां गृहीत्वा, लघु आगच्छामि।

(२) वयस्य,मा उत्ताम्य एष आगतोऽस्मि।

तथाहि।

प्रणयविशदां दृष्टिं वक्त्रे ददाति न शङ्किता
घटयति घनं कण्ठाश्लेषे रसान्न पयोधरौ ।
वदति बहुशो गच्छामीति प्रयत्नधृताप्यहो
रमयतितरां सङ्केतस्था तथापि हि कामिनी ।

अये कथञ्चिरयति वसन्तकः तत्किन्नु खलु विदितः स्यादयं वृत्तान्तो देव्या वासवदत्तया ।

॥ ततः प्रविशति वासवदत्ता काञ्चनमाला च ॥

वास । हञ्जे कञ्चणमाले, सच्चं एव्व मह वेसधारिणी भविअ, साअरिआ अज्जउत्तं अहिसरिस्सदित्ति ? (१)

काञ्च । कधं अणधा भट्टिणीए निवेदीअदि? अहवा चित्तसालिआ दुवारे उवविट्ठो वसन्तओ जेव्व दे पच्चयं उप्पादइस्सदि । (२)

वास । तेण हि तदो तहिं एव्व गच्छम्ह । (३)

काञ्च । एदु एदु भट्टिणी (४) ॥ इति परिक्रामतः ॥

॥ ततः प्रविशति कृतावगुण्ठनो वसन्तकः ॥

---

(१) हञ्जि काञ्चनमाले,सत्यमेव मम वेशधारिणी भूत्वा सागरिका आर्य्यपुत्रमभिसरिष्यतीति ?

(२) कथमन्यथा भर्त्र्यै निवेद्यते ? अथवा चित्रशालिकाद्वारे उपविष्टो वसन्तकएव ते प्रत्ययमुत्पादयिष्यति ।

(३) तदा तत्रैव गच्छामः ।

(४) एतु एतु भर्त्री ।

वास ॥ कर्णौ दत्वा ॥ जह अअं चित्तसालिआदुवारे पदसद्दो सुणो अदि, तह तक्केमि आअदा साअरिआत्ति । ( १ )

काञ्च । भट्टिणि इअं सा चित्तसालिआ ; ता इधज्जेव्व चिट्ठ; अहंपि वसन्तअस्स सण्णं देमि (२)

॥ इति छोटिकां ददाति ॥

विदू ॥ सहर्षं उपसृत्य सस्मितं ॥ सुसङ्गदे, सरिसो क्खु तुए किदो कञ्चणमालाए वेसो ; अध साअरिआ दाणिं कहिं । ( ३ )

काञ्च ॥ अङ्गुल्या दर्शयन्ती ॥ णं एसा । ( ४ )

विदू ॥ दृष्ट्वा सविस्मयं ॥ एसा फुडंज्जेव्व देवी वासवदत्ता? ( ५ )

वास ॥ ससंभ्रममपवार्य्य ॥ हञ्जे, कधं लक्खिदम्हि? ( ६ )

---

(१) यथा अयं चित्रशालिकाद्वारे पदशब्दः श्रूयते, तथा तर्कयामि आगता सागरिकेति ।

(२) भर्त्त्रि इयमा चित्रशालिका ; तस्मादिहैव तिष्ठ ; अहमपि वसन्तकस्य संज्ञां ददामि ।

(३) सुसङ्गते, सदृशः खलु त्वया कृतः काञ्चनमालाया वेशः ; अथ सागरिका इदानीं कुत्र ?

(४) ननु एषा ।

(५) एषा स्फुटमेव देवी वासवदत्ता ।

(६) चेटि, काञ्चनमाले कथं लक्षितास्मि ?

विदू। भोदि साअरिए, इदो आअछ। (१)

वास॥ विहस्य काञ्चनमालामवलोकयति॥

काञ्च। भट्टिणि एव्वं॥ अङ्गुल्या तर्जयन्ती॥ हदास; सुमरिस्सिसि एदं वअणं। (२)

विदू। तुअरदु तुअरदु साअरिआ एसो क्खु पुव्वदिसादो उग्गाक दि भअवं मिअलञ्छणो। (३)

॥ इति परिक्रामति॥

राजा॥ सोत्कण्ठं आत्मगतं॥ उपस्थितप्रियासमागमस्यापि किमिदमत्यर्थमुत्ताम्यति मे मनः? अथवा,

तीव्रः स्मरसन्तापो न तथादौ वाधते यथासन्ने
तपति प्रावृषि नितरामभ्यर्णजलागमो दिवसः।

विदू॥ आकर्ण्य॥ भोदि साअरिए, एष क्खु पिअवअस्सो तुमं एव्व उद्दिसिअ उक्कण्ठाणिब्भरं मन्तेदि; ता निवेदेमि से तुहागमणं। (४)

वास। अिरघ्यालयति।

---

(१) भवति सागरिके, इत आगच्छ।

(२) भर्त्रि एवमिदं। हताश, स्मरिष्यसीदं वचनं।

(३) त्वरतां त्वरतां सागरिका; एष खलु पूर्व्वदिश उद्गच्छति भगवान् मृगलाञ्छनः।

(४) भवति सागरिके, एष खलु प्रियवयस्यस्त्वामेवोद्दिश्य उत्कण्ठानिर्भरं मन्त्रयति, तन्निवेदयामि तस्मै तवागमनं।

विदू ॥ राजानमुपसृत्य ॥ भो वअस्स, दिट्ठिआ वड्ढसे; एसा क्खु मए आणीदा साअरिआ। ( १ )

राजा ॥ सहर्षं सहसोत्थाय ॥ क्वासौ, क्वासौ।

विदू। णं एसा। ( २ )

राजा ॥ उपसृत्य ॥ प्रिये सागरिके,

शीतांशुर्मुखमुत्पले तव दृशौ, पद्मानुकारौ करौ,
रम्भागर्भनिभं तवोरुयुगलं, बाहू मृणालोपमौ;
इत्याह्लादकराखिलाङ्गि, रभसान्निःशङ्कमालिङ्ग मा
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय।

वास ॥ सवाष्पमपवार्य्य ॥ कञ्चणमाले, एव्वं सअं मन्तेदि अज्जउत्तो; पुणोवि कहं आलविस्सदित्ति; अहो अचरीअं। ( ३ )

काञ्च। भट्टिणि, एव्वं णेद; किं उण अवरं साहसिआणं पुरिसाणं ण दुःकर सम्भावीअदि। ( ४ )

---

( १ ) भो वयस्य, दिष्ट्या वर्द्धसे, एषा खलु मया आनीता सागरिका।

( २ ) ननु एषा।

( ३ ) काञ्चनमाले, एवं स्वयं मन्त्रयति आर्य्यपुत्त्रः; पुनरपि कथमालपिष्यतीति; अहो आश्चर्य्यं।

( ४ ) भर्त्रि, एवमिदं; किं पुनरपरं साहसिकानां पुरुषाणां न दुष्करं संभाव्यते।

विदू । भोदि सात्र्परिए, वीसद्धा भविअ पिअवअस्सं आलावेहि अज्जवि दाव से णिच्चरुट्ठाए देवीए वासवदत्ताए दुव्वअणेहिं कडुइदाइं सोत्ताइं सम्पदं सुहाविदु तुह महुरवअणोवण्णासो । ( १ )

वास॥ सरोषं अपवार्य्य॥ हञ्जे कञ्चणमालि, अहं दिट्ठमी कडुभासिणी, अज्ज वसन्तओ उण पिअंवदो । ( २ )

काञ्च ॥ अपवार्य्य अङ्गुल्या तर्ज्जयन्ती ॥ हदास, सुमरिस्सवि एदं वअणं । ( ३ )

विदू ॥ विलोक्य ॥ भो वअस्स, पेक्ख, पेक्ख, एसो क्खु कुविदकामिणी कवोलसप्पहो सव्वं पआसअंतो, उदिदो भअवं मिअलंछणो । ( ४ )

राजा ॥ निरूप्य सस्पृहं ॥ प्रिये, पश्य, पश्य,

आरुह्य शैलशिखरं त्वदनापहृतकान्तिसर्व्वस्वः,

फूत्कर्तुमिवोर्द्ध्वकरः, स्थितः पुरस्तान्निशानाथः।

अपिच । ननु प्रिये, किञ्च दर्शितमनेनोद्गच्छता, जडत्वं कुतः ,

---

( १ ) भवति सागरिके, विश्रब्धा भूत्वा, प्रियवयस्यमालप; अद्यापि तावदस्याः नित्यरुष्टाया देव्या वासवदत्ताया दुर्व्वचनैः कटूकृतानि श्रोत्राणि, साम्प्रतं सुखयतु तव मधुरवचनोपन्यासः ।

( २ ) चेटि काञ्चनमालेऽहमीदृशी कटुभाषिणी आर्य्यवसन्तकः पुनः प्रियंवदः ।

( ३ ) हताश, स्मरिष्यसि इदं वचनं ।

( ४ ) भो वयस्य, पश्य, पश्य, एष खलु कुपितकामिनीकपोलसप्रभः सर्व्वं प्रकाशयन्, उदितो भगवान् मृगलाञ्छनः ॥

किं पद्मस्य रुचिं न हन्ति, नयनानन्दं विधत्ते न किं,
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किं।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते,
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे।

वास ॥ मुखावगुण्ठनपटमपनीय ॥ अज्जउत्त, सच्चं एव्व अहं साअरिआ, तुमं उण साअरिआउत्तक्खित्तहिअओ, सव्वं एव्व साअरिआमअं पेक्खसि। ( १ )

राजा ॥ दृष्ट्वा सवैलक्ष्यं ॥ हा धिक्कष्टं, कथं देवी वासवदत्ता। वयस्य किमेतत्?

विदू ॥ सविषादं ॥ भो वअस्स, किं अम्हाणं जीविदसंसओ आदो एसो। ( २ )

राजा ॥ उपविश्य अञ्जलिं बद्ध्वा ॥ प्रिये वासवदत्ते, प्रसीद, प्रसीद।

वास। अज्जउत्त, मा एव्वं भण अणत्थगदाइं एदाइं अक्खराइं। ( ३ )

विदू ॥ आत्मगतं ॥ किं दाणिं एत्थ करिस्सं, भोदु एव्वं दाव।

प्रकाशं ॥ भोदि, महानुभावा क्खु तुमं, ता खमीअदु दाव एक्को अवराहो पिअवअस्सस्स। ( ४ )

---

( १ ) आर्य्यपुत्र, सत्यमेवाहं सागरिका, त्वं पुनः सागरिकोत्क्षिप्तहृदयः, सर्व्वं सागरिकामयं पश्यसि।

( २ ) भो वयस्य, किमस्माकं जीवितसंशयो आतएषः।

( ३ ) आर्य्यपुत्र, मा एवं भण अनर्थसङ्गतान्येतान्यक्षराणि।

( ४ ) किमिदानीमत्र करिष्यामि, भवतु एवं तावत्, महानुभावा खलु त्वं, तत्क्षम्यतां तावदेकोऽपराधः प्रियवयस्यस्य।

वास। अज्ज वसन्तअ णं, पढमसङ्कमे विग्धं करन्तीए मए एव्व एदस्स अवरद्धं ।( १ )

राजा। एवं दृष्टव्यलीकः किं ब्रवीमि;तथापि विज्ञापयामि,

आताम्रतामुपनयामि विलक्ष एष
लाक्षाकृतां चरणयोस्तव देवि मूर्ध्ना;
कोपोपरागजनितान्तु, मुखेन्दुबिम्बे,
हर्तुं क्षमो यदि परं करुणा मयि स्यात् ।

॥ इति पादयोः पतति ॥

वास ॥ हस्तेन वारयन्ती ॥ अज्जउत्त उट्ठेहि, उट्ठेहि;णिलज्जो क्खु सो अ णो ओ अज्जउत्तस्स दंदिसं हिअअं जाणिअ पुणोवि कुप्पदि ! ता सुहं चिट्ठदु अज्जउत्तो, अहं गमिस्सं ॥ इति गच्छति ॥ ( २ )

काञ्च । भट्टिणि करेहि पसादं, एवं चरणपडिअं महाराअं उज्झिअ, गदाए देवीए अवस्सं पच्छादावेण होदव्वं । ( ३ )

---

( १ ) आर्य्य वसन्तक,ननु प्रथमसङ्क्रमे विघ्नं कुर्व्वन्त्या मयैव एतस्या पराद्धं ।

( २ ) आर्य्यपुत्र, उत्तिष्ठोत्तिष्ठ;निर्लज्जः खलु स जनो यथार्य्यपुत्र स्येदृशं हृदयं ज्ञात्वा,पुनरपि कुप्यति, तस्मात् सुखं तिष्ठत्वार्य्यपुत्रः, अहं गमिष्यामि ।

( ३ ) भर्त्रि,कुरुष्व प्रसादं एवं चरणपतितं महाराजमुज्झित्वा गता या देव्या अवश्यं पश्चात्तापेन भवितव्यं ।

वास । अवेहि अपण्डिदे, किं एत्थ पमादस्स पच्चादावस्स वा कारणं ता गच्छम्ह । ( १ )

॥ इति निष्क्रान्ते ॥

राजा । देवि, प्रसीद प्रसीद ।

विदू । भो, उट्ठेहि, गदा सा वासवदत्ता देवी ता कीस एत्थ अरण्णरुदिदं करेसि । ( २ )

राजा ॥ मुखमुन्नमीकृत्य ॥ कथमकृत्वैव प्रसादं, गता देवी ।

विदू । न कदो कहं पसादो, जं अज्जवि अक्खदसरीरा चिट्ठम्ह । ( ३ )

राजा । धिङ्मूर्ख, किमेवमुपहससि मां, ननु त्वत्कृत एवायमापतितो ऽस्माकमनर्थक्रमः ।

यतः । समारूढा प्रीतिः प्रणयबहुमानादनुदिनं
व्यलीकं वीक्ष्येदं कृतमकृतपूर्वं खलु मया ।
सुखं मुञ्चत्यद्य स्फुटमसहना जीवितमसौ
प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति ।

---

( १ ) अपेहि, अपण्डिते, किमत्र प्रमादस्य पश्चात्तापस्य वा कारणं? तस्मात् गच्छाम ।

( २ ) भो उत्तिष्ठोत्तिष्ठ, गता सा वासवदत्ता देवी, तत् कथमत्र अरण्यरुदितं करोषि ।

( ३ ) न कृतः कथं प्रसादो, यदद्यापि वयमक्षतशरीरास्तिष्ठाम ।

विदू । भो, रुट्ठा देवी दाव ण आणीअदि किं करिस्सदित्ति; साअ रिआ उण जीवदि णवेत्ति । ( १ )

राजा । वयस्य, अहमप्येवं चिन्तयामि ।

॥ ततः प्रविशति वासवदत्ताविशधारिणी सागरिका ॥

साग ॥ सोद्वेगं ॥ दिट्ठिआ इमिणा विरइददेवीवेसेण इमादो सङ्गीद सालादो णिक्कमन्ती केणावि ण लक्खिदम्हि; ता दाणिं किं करिस्सं? (२)

॥ इति सास्रं चिन्तयति ॥

विदू । भोः किं मूढो विअ चिट्ठसि, चिन्तेहि एत्थ पडिआरं । (३ )

राजा । वयस्य, तदेव चिन्तयामि ।

साग ॥ विमृश्य ॥ वरं दाणिं सअं जेव्व अत्ताणअं उव्वन्धिअ उव रदा भविस्सं, ण उण विदिदसङ्केतवुत्तन्ताए सुसंगदाए सह देवीए परिभूदा चिट्ठम्हि; ता जाव अहं असोअपादअदले गदुअ, जह समी हिदं करिस्सं । ( ४ ) ॥ इति परिक्रामति ॥

---

( १ ) भो, रुष्टा देवी तावत् न ज्ञायते किं करिष्यति; सागरिका पुन र्जीवति नवेति ।

( २ ) दिष्ट्या अनेन विरचितदेवीवेशेन अस्याः सङ्गीतशालातो निष्क्र मन्ती केनापि न लक्षितास्मि; तत् किमिदानीं करिष्यामि ?

( ३ ) भोः, किं मूढ इव तिष्ठसि, चिन्तय अत्र प्रतीकारं ।

( ४ ) वरमिदानीं स्वयमेवात्मानमुद्बध्य उपरता भविष्यामि, न पुनर्विदितसङ्केतवृत्तान्तया सुसङ्गतया सह देव्या परिभूता तिष्ठामि; तद्यावदहमशोकपादपतले गत्वा, यथासमीहितं करिष्यामि ।

राजा । वयस्य देवीप्रसादं मुक्त्वा नान्यमुपायं पश्यामि। तदेहि तत्रैव गच्छावः ॥ इति परिक्रामतः ॥

विदू ॥ आकर्ण्य ॥ चिट्ठ दाव चिट्ठ भो: पदसद्दो सुणीअदि जाणामि कदापि गहिदपच्छादावा पुणोवि देवी आअदा भवे। ( १ )

राजा । वयस्य महानुभावा खलु देवी कदाचिदेवमपि स्यात् तत्त्वरितं निरूपय ।

विदू । जं भवं आणवेदि ॥ इति निष्क्रामति ॥ ( २ )

साग ॥ उपसृत्य ॥ ता जाव इमाए माहवीलदाए इहजेव्व असोअपादवे अप्पाणअं उब्बन्धिअ वावादेमि इति ॥ लतापाशं रचयन्ती ॥ हा ताद हा अम्म एसा दाणिं अहं अणाधा असरणा विपज्जामि मन्दभाइणी। ( ३ ) ॥ इति कण्ठे लतापाशमर्पयति ॥

---

( १ ) तिष्ठ तावत् तिष्ठ भो: पदशब्दः श्रूयते जानामि कदापि गृहीतपश्चात्तापा पुनरपि देवी आगता भवेत्।

( २ ) यद्भवान् आज्ञापयति।

( ३ ) तद्यावत् अस्यां माधवीलतायामिहैव अशोकपादपे आत्मानमुद्बध्य व्यापादयामि। हा तात हा मातः एषा इदानीमहमनाथा अशरणा विपद्ये मन्दभागिनी।

विदू ॥ विलोक्य ॥ का उण एषा;कधं उण देवी वासवदत्ता ॥ ससंभ्रम मुचैः ॥ भो वअस्स,परित्ताहि परित्ताहि, एसा क्खु देवी वासवदत्ता, अप्पाणअं उव्वन्धिअ वावादेदि। (१)

राजा ॥ ससंभ्रममुपसृत्य ॥ वयस्य, क्वासौ ?

विदू। णं एसा।

राजा ॥ कण्ठात्पाशमपनयति ॥ अयि साहसकारिणि, किमिद मकार्य्यं क्रियते ?

मम कण्ठगताः प्राणाः पाशे कण्ठगते तव,
न च स्वार्थप्रयत्नोऽयं; त्यज्यतां साहसं प्रिये।

साग ॥ राजानं दृष्ट्वा ॥ अह्मो;कधं एस भट्टा॥ सहर्षमात्मगतं ॥ जं सच्चं, एणं पेक्खिअ; पुणोवि मे जीविदाहिलासो समुप्पन्नो;अहवा एणं पेक्खिअ, कदत्था भविअ,सुहेण अप्पाणं उव्वन्धिअ जीविदं परिच्चइस्सं ॥ प्रकाशं ॥ मुञ्चदु मं भट्टा; पराहीणो क्खु अअं जणो ण उण ईदिसं अवसरं मरिदुं पावेदि; तुमंपि देवीए मा अप्पाणं अवराहिणं करेसि ॥ (२)

---

(१) का पुनरेषा; कथं पुनर्देवी वासवदत्ता। भो वयस्य, परि त्रायस्व,परित्रायस्व, एषा खलु देवी वासवदत्ता आत्मानमुद्बध्य व्यापा दयति।

(२) आश्चर्य्यं; कथमेष भर्त्ता, यत्सत्यमेनं दृष्ट्वा पुनरपि मे जीवि ताभिलाषः संवृत्तः;अथवा एनं दृष्ट्वा,कृतार्था भूत्वा; सुखेन आत्मानं परित्यक्ष्यामि। मुञ्चतु मां भर्त्ता; पराधीनः खल्वयं जनो न पुनरीदृशं अवसरं मर्त्तुं प्राप्नोति; त्वमपि देव्या मा आत्मानं अपराधिनं करोषि।

॥ इति पुनः कण्ठे पाशं दातुमिच्छति ॥

राजा ॥ निरूप्य सहर्षं ॥ कथं प्रिया मे सागरिका ॥ इति कण्ठात्पाशमाक्षिप्य ॥

अलमलमतिमात्रं साहसेनामुना ते,
त्वरितमयि विमुञ्च त्वं लतापाशमेनं
चलितमपि निरोद्धुं जीवितं,जीवितेशे,
क्षणमिह मम कण्ठे बाहुपाशं निधेहि।

॥ इति बाहुपाशमाक्षिप्य कण्ठे ददाति ॥ सखे, इयमनभ्रा वृष्टिः।

विदू। भो एव्वं णेदं,जइ अआलवादावली भविअ,देवी अण्णधा करिस्सदि। (१)

॥ ततः प्रविशति वासवदत्ता काञ्चनमाला च ॥

वास। हञ्जे कञ्चणमाले,तहा चरणणिवडिदं अज्जउत्तं अवधीरिअ आअच्छन्तीए मए अदिणिट्ठुरं कदं,ता दाणिं सअं एव्व गदुअ अज्जउत्तं अणुणइस्सं। (२)

---

(१) भो एवमिदं, यदि अकालवातावली भूत्वा, देवी अनन्यथा करिष्यति।

(२) चेटि काञ्चनमाले, तथा चरणनिपतितं आर्य्यपुत्रमवधीर्य्य आगच्छन्त्या मया अतिनिष्ठुरं कृतं,तदिदानीं स्वयमेव गत्वा आर्य्यपुत्रमनुनेष्यामि।

राजा ॥ स्वगतं ॥ किमेतदपि श्रुतं देव्या? तत्सर्वथा देवीप्रसादनोपाय प्रति निराशीभूताः स्मः ॥ इत्यधोमुखस्तिष्ठति ॥

विदू। भोदि, तुमं किल अत्ताणअं उब्बन्धिअ विवज्जसित्ति, वेसमारिसभोसिदेण मए पिअवअस्सो एत्थ आणीदो। जइ मम वअणं ण पत्तिआअसि,ता पेक्ख इमं लदापासं॥ इति लतापाशं दर्शयति ॥(१)

वास। हञ्जे कञ्चणमाले, एदेण एव्व लदापासेण बन्धिअ, गेह्न बह्मणं एदं,दुट्ठकणअं आ अ,अग्गदो करेहि। ( २ )

काञ्च। जं देवी आणवेदित्ति॥ लतापाशेन वसन्तकं गले बध्वा,ताडयति॥ हदास,अणुभव दाव अत्तणो अविणअस्स फलं,देवीए दुव्वअणेण कडुददारं सोत्ताइंत्ति सुमरेहि तं वअणं। साअरिए, तुमंपि अग्गदो होहि। ( ३ )

---

( १ ) भवति,त्वं किल आत्मानमुद्बध्य विपद्यसे इति वेशसादृश्यमाश्रितेन मया प्रियवयस्योऽत्र आनीतः। यदि मे वचनं न प्रत्ययसे, तदा पश्य इमं लतापाशं।

( २ ) चेटि काञ्चनमाले,एतेनैव लतापाशेन बद्धा गृहाणैनं ब्राह्मणं, इमां दुष्टकन्यकाञ्च अग्रतः कुरु।

( ३ ) हताश, अनुभव तावदात्मनोऽविनयस्य फलं, देव्या दुर्वचनेन कटूक्तानि श्रोष्याणीति स्मर तद्वचनं। सागरिके, त्वमपि अग्रतो भव।

सागं ॥ स्वगतं ॥ अकिदपुणाए मए मरिदुंपि अत्तणो इच्छाए ण पारिदं। (१)

विदू ॥ सविषादं ॥ भो वअस्स, सुमरेहि मं अणाधं देवीए बन्धणादो विवज्जन्तं। (२) ॥ इति राजानमवलोकयति ॥ सर्व्वानादाय निष्क्रान्ता वासवदत्ता।

राजा ॥ सखेदं ॥ कष्टं भोः कष्टं।

किं देव्याः कृतदीर्घरोषमुषितस्निग्धस्मितं तन्मुखं?
किं वा सागरिकां क्रमोद्धतरुषा संतर्ज्जमानां तया?
बध्वा नीतमितो वसन्तकमहं किं चिन्तयाम्यद्य भोः?
सर्व्वाकारकृतव्यथः क्षणमपि प्राप्नोमि नो निर्वृतिं।

ततः किमिदानीमिह स्थितेन प्रयोजनं? देवीं प्रसादयितुमभ्यन्तरमेव प्रविशामि ॥ इति निष्क्रान्ताः सर्व्वे॥

॥ तृतीयोऽङ्कः ॥

---

(१) अकृतपुण्यया मया मर्त्तुमपि आत्मन इच्छया न पारितं।

(२) भो वयस्य, स्मर मामनाथं देव्याबन्धनात् विपद्यमानं।



## ॥ अथ चतुर्थोऽङ्कः ॥

---

॥ ततः प्रविशति रत्नमालामादाय साङ्खा सुसङ्गता ॥

सुसं ॥ सकरुणं ॥ हा पिअसहि साअरिए, हा लज्जालुए, हा सहीगणवच्छले, हा उदारसीले, हा सोम्मदंसणे, कहिं गदा दाणिं तुमं मए पेक्खिदव्वा॥ इति रोदिति ॥ ऊर्ध्वमवलोक्य निश्वस्य च ॥ हंहो देव्वहदअ, अकरुण, असामण्णरूपसोहा तादिसी तुए जइ णिम्मिदा, ता कीस उण इदिसं अवत्थन्तरं पाविदा। इयञ्च रअणमालावि, जीविदणिरासाए ताए, एकस्सवि वम्हणस्स हत्थे पडिवादेसुत्ति भणिअ, मम हत्थे समप्पिदा, ता जाव वम्हणं अण्णेसामि ॥ नेपथ्याभिमुखमवलोक्य ॥ अए कहं एसो क्खु वम्हणो वसन्तअ इध एव्व आअच्छदि, ता इमस्सिं एव्व पडिवादेमि। (१)

---

(१) हा प्रियसखि सागरिके, हा लज्जालुके, हा सखीगणवत्सले, हा उदारशीले, हा सौम्यदर्शने, कुत्र गतेदानीं त्वं प्रेक्षितव्या। हंहो दैवहतक, अकरुण, असामान्यरूपशोभा तादृशी त्वया यदि निर्म्मिता, तत्कथं पुनरीदृशमवस्थान्तरं प्रापिता। इयञ्च रत्नमालापि, जीवितनिराशया तया, एकस्य

॥ ततः प्रविशति हृष्टो वसन्तकः ॥

वस। हीही भोः, अज्ज क्खु पिअवअस्सेण पसादिदाए देवीए वास वदत्ताए बम्हणादो मोचिअ, सहत्थदिण्णेहिं मोदअलड्डुआहिं उदरं कतं मे सुपूरिदं; अणञ्च एदं पट्ठं अम्बअजुअलं, कणाभरणं अ, दिण्णं; ता जाव दाणिं पिअवअस्सं पेक्खिस्सं। ( १ ) ॥ इति परिक्रामति ॥

सुसं ॥ रुदन्ती सहसोपसृत्य ॥ अज्ज वसन्तअ, चिट्ठ दाव तुमं मुहुत्तअं। ( २ )

विदू ॥ दृष्ट्वा ॥ कथं सुसङ्गदे, एत्थ किं णिमित्तं रोदीअदि? किं णु क्खु साअरिआए अचाहिदं समुत्तं? ( ३ )

---

ब्राह्मणस्य हस्ते प्रतिपादयेति भणित्वा, मम हस्ते समर्पिता, तद्यावत् ब्राह्मणमन्वेषयामि। अये कथमेष खलु ब्राह्मणो वसन्तक इहैव आगच्छति, तदस्मै एव प्रतिपादयामि।

( १ ) अद्य खलु प्रियवयस्येन प्रसादितया देव्या वासवदत्तया ब्रह्म नान्मोचयित्वा, स्वहस्तदत्तैर्मोदकलड्डुकैः सुपूरितं मे उदरं कृतं; अन्यच पट्टमम्बरयुगलं कर्णाभरणञ्च दत्तं; तद्यावदिदानीं प्रियवयस्यं प्रेक्षिष्ये।

( २ ) आर्य्य वसन्तक, तिष्ठ त्वं तावन्मुहूर्त्तकं।

( ३ ) सुसङ्गते, किन्निमित्तं रुद्यते? किं नु खलु सागरिकाया अत्याहितं समुत्तं?

सुसं । अहं एव्व णिवेददस्सं। सा क्खु तवस्सिणी देवीए उज्जइणिं पेसिदेत्ति पवादं कदुअ, अद्धवत्तेण आणीअ कहिं णीदेत्ति। (१)

विदू ॥ सोद्वेगं ॥ भोदि साअरिए, हा असामसरूअसोहे, हा मिदुभासिणि, अदिणिट्ठुरं दे देवीए कदं । (२)

सुसं। एसा रअणमाला, ताए जीविदणिरासाए अज्जवसन्तअस्स हत्थे पडिवादेसुत्ति भणिअ, मम हत्थे समप्पिदा।तता णं गेण्हदु अज्जो एदं। (३)

विदू । सास्रं सकरुणं कर्णौ पिधाय ॥ भोदि, कधं मम इदिसे पत्थावे एदं गेण्हिदुं हत्थो पसरदि । (४) ॥ इत्युभौ रुदतः ॥

सुसं ॥ अञ्जलिं बध्वा ॥ ताए एव्व अणुग्गहं करन्तो अङ्गीकरेदु एदं अज्जो । (५)

---

(१) अहमेव निवेदयिष्यामि।सा खलु तपस्विनी देव्या उज्जयिनीं प्रेषितेति प्रवादं कृत्वा,अर्द्धवर्त्मना आनीय कुत्र नीतेति।

(२) भवति सागरिके,हा असामान्यरूपशोभे,हा मृदुभाषिणि, अतिनिष्ठुरं ते देव्याकृतं।

(३) एषा रत्नमाला, तया जीवितनिराशया आर्य्यवसन्तकस्य प्रतिपादयेति भणित्वा,मम हस्ते समर्पिता।तत्प्रतीच्छतु एनां आर्य्यः।

(४) भवति कथं ममेदृशे प्रस्तावे इमां गृहीतुं हस्तः प्रसरति।

(५) तस्या एवानुग्रहं कुर्व्वन् अङ्गीकरोतु आर्य्यः।

विदू ॥ विचिन्त्य ॥ अहवा, उवणेहि, जेण इमाए ज्जेव्व साअरिआ विरहुक्कण्ठिदं पिअवअस्सं विणोदेमि। (१)

सुसं ॥ वसन्तकस्य हस्ते रत्नमालां ददाति ॥

विदू ॥ गृहीत्वा, निरूप्य सविस्मयं ॥ भोदि, कुदो उण एदिसस्स अलङ्कारस्स समागमो? (२)

सुसं। अज्ज, मएवि कोदूहलेण पुच्छिदं ज्जेव्व। (३)

विदू। तदो ताए किं भणिअं? (४)

सुसं। तदो सा उड्ढं पेक्खिअ, दीहं णिस्ससिअ, सुसङ्गदे, किंदाणि तव इमाए कधाएत्ति भणिअ, रोदिदुं पउत्ता। (५)

विदू। णं कधिदं एव्व ताए, सामण्णजणदुल्लहेण इमिणा परिचएण सव्वधा महाभिजणसमुप्पणाए ताए होदव्वं। सुसङ्गदे, पिअवअस्सो दाणिं कहिं? (६)

---

(१) अथवा, उपनय, येनानयैव सागरिकाविरहोत्कण्ठितं प्रियवयस्यं विनोदयामि।

(२) भवति, कुतः पुनरीदृशस्यालङ्कारस्य समागमः?

(३) आर्य्य, मयापि कुतूहलेन पृष्टमेव।

(४) तदा तया किं भणितं?

(५) तदा सा ऊर्द्धं दृष्ट्वा, दीर्घं निश्वस्य, सुसङ्गते, किमिदानीं तव अनया कथयेति भणित्वा, रोदितुं प्रवृत्ता।

(६) ननु कथितमेव तया, सामान्यजनदुर्लभेन अमुना परिचयेन सर्व्वथा महाभिजनसमुत्पन्नया तया भवितव्यं। सुसङ्गते, प्रियवयस्य इदानीं कुत्र?

सुसं । अज्ज, एसो क्खु भट्टा देवीभवणादो णिक्कमिअ, फडिअसिला मण्डवं गदो ; ता गच्छदु अज्जो ; अहंवि देवीए वासवदत्ताए परिचारिणी भविस्सं । ( १ ) ॥ इति निष्क्रान्तौ प्रवेशकः ॥

ततः प्रविशत्यासनस्थो राजा ।

राजा ॥ विचिन्त्य ॥

सव्याजैः शपथैः, प्रियेण वचसा, चित्तानुवृत्त्याधिकं
वैलक्ष्येण परेण, पादपतनैर्वाक्यैः सखीनां पुरः ।
प्रत्यासत्तिमुपागता न हि तथा देवी, रुदत्या यथा
प्रक्षाल्येव तथैव वाष्पसलिलैः कोपोऽपनीतः स्वयं ।

॥ सोत्कण्ठं निःश्वस्य ॥ तावदिदानीं देव्यां प्रसादितायां, सागरिका चिन्तैव केवलं मां बाधते कुतः ?

अम्भोजगर्भसुकुमारतनुस्तथासौ
कण्ठग्रहे प्रथमरागघने विलीय,
सद्यः पतन्मदनमार्गणरंध्रमार्गै
र्मन्ये मम प्रियतमा हृदयं प्रविष्टा ।

॥ विचिन्त्य ॥ योऽपि मे विश्रामस्थानं वसन्तकः, सोऽपि देव्या संयतः, तत्कस्याग्रतो वाष्पमोक्षं करिष्ये ॥ इति निःश्वसिति ॥

---

( १ ) आर्य्य, एष खलु भर्त्ता देवीभवनतो निष्क्रम्य, स्फटिकशिलामण्डपं गतः ; तद्गच्छत्वार्य्यः ; अहमपि देव्या वासवदत्तायाः परिचारिणी भविष्यामि ।

॥ ततः प्रविशति वसन्तकः ॥

वस ॥ परिक्रम्यावलोक्य च सविस्मयं ॥ एसो क्खु पिअवअस्सो णिर न्तरुक्कण्ठापरिक्खामम्मपि सलाहणिज्जं तणुं समुव्वहन्तो, उदिदो, दुदिआचन्दोविअ अहिअदरं सोहदि; ता जाव णं उवसप्पामि ॥ उप सृत्य ॥ सोत्थि भवदे; भो दिट्ठिआ वड्ढेसि, देवीहत्थगदेणावि मए पुणोवि एदेहिं अक्खीहिं अं दिट्ठोसि।( १ )

राजा ॥ दृष्ट्वा सहर्षं॥ अये वसन्तकः प्राप्तः! सखे परिष्वजस्व मां।

विदू॥ परिष्वज्य॥ भोवअस्स; देवीए अणुग्गहीदोह्मि। ( २ )

राजा । वेशेनैव निवेदितस्ते देव्याः प्रसादः, तत्कथ्यतामिदानीं सागरिकायाः किं वर्त्ततइति?

विदू ॥ सवैलक्ष्यमधोमुखस्तिष्ठति ॥

राजा। वयस्य किन्न कथयसि?

विदू। अप्पिअं णिवेदिदुं दे ण पारेमि। ( ३ )

राजा ॥ सोद्वेगं ससंभ्रमं ॥ वयस्य, कथमप्रियं? किं? व्यक्तमेवात्सृष्टं जीवितं तया। हा प्रिये सागरिके इति॥ मोहं नाटयति ॥

---

( १ ) एष खलु प्रियवयस्यो निरन्तरोत्कण्ठापरिक्षामामपि श्लाघ नीयां तनुं समुद्वहन्, उदितो, द्वितीयाचन्द्रइव अधिकतरं शोभते; तद्या वदेनमुपसर्पामि। स्वस्ति भवते, भो दिष्ट्या वर्द्धसे, देवीहस्तगतेनापि मया पुनरपि एतैरक्षिभिर्यद्दृष्टोऽसि।

( २ ) भो वयस्य, देव्या अनुगृहीतोऽस्मि।

( ३ ) अप्रियं निवेदितुं न शक्नोमि।

विदू ॥ ससंभ्रमं । समस्ससदु, समस्ससदु, पिअवअस्सो । ( १ )

राजा ॥ समाश्वस्य सास्रं ॥

प्राणाः, परित्यजत काममदक्षिणं मां;
हे दक्षिणा भवत, मद्वचनं कुरुध्वं।
शीघ्रं न यात यदि, तन्मुषिताः स्थ नूनं;
याता सुदूरमधुना गजगामिनी सा।

विदू। भो मा; अण्णधा सम्भावेहि; सा क्खु देवीए उज्जइणिं पेसि दत्ति सुणीअदि; अदो मए अप्पिअंत्ति भणिदं। ( २ )

राजा। कथमुज्जयिनीं प्रेषिता? अहो निरनुरोधा मयि देवी। वयस्य केन तवैतदाख्यातं?

विदू। भो, सुसङ्गदाए। अयं च मम हत्थे ताए केणावि कज्जेण इअं रअणमाला पेसिदा। ( ३ )

राजा। किमपरं, मामाश्वासयितुं। तद्वयस्य उपनय।

विदू ॥ उपनयति ॥

राजा ॥ गृहीत्वा रत्नमालां, निर्वर्ण्य, हृदये ददाति ॥ अहह!

---

( १ ) समाश्वसितु, समाश्वसितु, प्रियवयस्यः।

( २ ) भो मा; अन्यथा सम्भावय सा; खलु देव्या उज्जयिनीं प्रेषितेति श्रूयते; अतो मया अप्रियमिति भणितं।

( ३ ) भोः, सुसङ्गतया। अन्यच्च मम हस्ते तया केनापि कार्य्येण इयं रत्नमाला प्रेषिता।

कण्ठाश्लेषं समासाद्य, तस्याः प्रभ्रष्टयानया,
तुल्यावस्था सखी चेयं, तनुराश्वास्यते मम।

वयस्य, परिधत्स्वैनां, येन वयमेनामपि तावद्दृष्ट्वा, धृतिङ्करिष्यामः।

विदू। जं भवं आणवेदित्ति ॥ कण्ठे परिददाति ॥

राजा ॥ निश्वस्य ॥ वयस्य, दुर्लभं दर्शनं पुनः प्रियायाः।

विदू॥ कर्णौ पिधाय सभयं ॥ भो, मा एव्वं उत्तं मन्तेहि, कदा वि कोवि एत्थ मक्खरदि। (१)।

॥ ततः प्रविशति खड्गहस्ता वसुन्धरा ॥

वसुं॥ उपसृत्य ॥ जअदु, जअदु भट्टा। एसो क्खु रुमण्णदो भाइणेओ विजअवम्मा, पिअं णिवेदिदुकामो, दुआरे चिट्ठदि। (२)

राजा। वसुन्धरे, अविलम्बितं प्रवेशय।

वसुं। जं देवो आणवेदित्ति॥ निष्क्रम्य, विजयवर्मणा सह पुनः प्रविश्य च॥ विजयवर्म्मन्, एसो क्खु भट्टा, ता उपसप्पदु अज्जो णं। (३)

---

(१) भो मा एवं उत्तं मन्त्रय, कदापि कोऽपि अत्र मक्षरति

(२) जयतु, जयतु भर्त्ता, एष खलु रुमण्वतो भागिनेयो विजयवर्म्मा, प्रियं निवेदितुं, द्वारे तिष्ठति।

(३) विजयवर्म्मन्, एष खलु भर्त्ता तदुपसर्पतु आर्य्य एनं।

विजयवर्म्मा ॥ उपसृत्य ॥ जयतु, जयतु देवः। देव, दिष्ट्या वर्द्धसे, रुम ण्वतो विजयेन।

राजा ॥ सपरितोषं ॥ विजयवर्म्मन्, अपि जिताः कोशलाः?

विजय। देवस्य प्रसादात्।

राजा। साधु, रुमण्वन्, साधु; अचिरान्महत्प्रयोजनमनुष्ठितं। विजयव र्म्मन्, तत्कथय कथामतिविस्तरतः श्रोतुमिच्छामि।

विजय। देव श्रूयतां। इतोदेवादेशात्कतिपयैरेवाहोभिरनेककरितु रगपत्तिदुर्निवारेण महता बलसमूहेन गत्वा, रुमण्वान् विन्ध्यदुर्गाव स्थितस्य कोशलनृपतेर्द्वारमवष्टभ्य, सेनां समावेशयितुमारब्धवान्।

राजा। ततस्ततः।

विजय। ततः कोशलेश्वरोऽपि अतिदर्पात् रुमण्वत्परिभवमसह मानो, हास्तिकप्रायमशेषमात्मसैन्यं सज्जीकृतवान्।

विदू। भो, लहु आचक्ख, वेवदि मे हिअअं। (१)

राजा। ततस्ततः।

विजय। देव,

योद्धुं निर्गत्य विन्ध्यादभवदभिमुखस्तत्क्षणं दिग्विभागान्,
विन्ध्येनेवापरेण द्विपपतिपृतनापीडबन्धेन रुन्धन्;
वेगाद्बाणान्विमुञ्चन्नथ समदगजोत्पिष्टपत्तिर्निपत्य,
प्रत्यायाद्बात्क्षितास्त्रिद्विगुणितरभसस्तं रुमण्वान् क्षणेन।

अपि च।

अस्त्रव्यस्तशिरस्त्रशस्त्रकषणैः कृत्तोत्तमाङ्गे क्षणं,
व्यूढासृक्सरिति, स्वनत्प्रहरणे, वर्म्मोद्वमद्वह्निनि,

श्राक्रयाजिमुखे, सकोशलपतिर्भग्ने प्रधाने बले,

राजा । कथमस्मदीयान्यपि बलानि भग्नानि?

विजय । एकेनैव रुमण्वता शरशतैर्मत्तद्विपस्थो हतः ।

विदू । जेदु, जेदु भवं, जिदं अम्मेहिं इति नृत्यति ॥

राजा । साधु, कोशलपते, साधु, मृत्युरपि ते श्लाघ्यः, यस्य हि रिपवोऽपि पुरुषकारमेवं वर्णयन्ति । ततस्ततः;

विजय । देव, ततो रुमण्वानपि कोशलेषु मद्भ्रातरं ज्यायांसं जयवर्म्माणं स्थापयित्वा, प्रहारव्रणितहास्तिकप्रायमेशेषसैन्यमनुवर्त्तमानः, शनैःशनैरागत एव ।

राजा । वसुन्धरे, उच्यतां यौगन्धरायणः, प्रदर्श्यतां मत्प्रसादस्य विभव इति ।

वसु । जं देवो आणवेदित्ति विजयवर्म्मणा सह निष्क्रान्ता ।

॥ ततः प्रविशति काञ्चनमाला ॥

काञ्च । आणत्तम्हि देवीए, जह गच्छ, हञ्जे कञ्चणमाले, एदं इंदजालिअं अज्जउत्तस्स दंसेहि ॥ इति परिक्रम्यावलोक्य च ॥ एसो क्खु भट्टा, ता जाव णं उवसप्पामि ॥ उपसृत्य ॥ जेदु जेदु भट्टा । भट्टा, देवी विण्णवेदि एसो क्खु उज्जयिणीदो, सम्बरसिद्धि णाम, इन्दजालिओ आअदो; ता पेक्खदु भट्टा । (१)

---

(१) आज्ञप्तास्मि देव्या, यथा गच्छ, चेटि, इममैन्द्रजालिकमार्य्यपुत्रस्य दर्शय । एष खलु देवः, तद्यावदेनमुपसर्पामि । जयतु जयतु भर्त्ता, देव, देवी विज्ञापयति, एष खलु उज्जयिनीतः, सम्बरसिद्धिर्नाम, ऐन्द्रजालिक आगतः तत्पश्यतु देवः ।

राजा। अस्ति नः कौतुकमैन्द्रजालिके; ततः शीघ्रं प्रवेशय।

काञ्च। जं भट्टा आणवेदित्ति॥ निष्क्रम्य पिच्छिकाहस्तेनैन्द्रजालिकेन सह प्रविशति॥

चेटी। एदु एदु अज्जो॥ ऐन्द्रजालिकः परिक्रामति॥

चेटी। एसा भट्टा, ता उवसप्पदु अज्जो। (१)

ऐन्द्र॥ उपसृत्य॥ जअदु, जअदु, भट्टा॥ पिच्छिकां भ्रमयित्वा बहुधा हास्यं कृत्वा॥

पणमह चरणे इन्दस्स, इन्दआलिअत्ति लद्धणामस्स,

तहजेव्व, अज्ज, सम्बरस्स विवरस्स सुपरिट्ठिदजसस्स।

देव, किं,

धरणीए मिअङ्को, आआसे महिहरो, जले जलणो,

मज्झण्हम्मि पओसो, दाव, सिज्झउ, देहि आणत्तिं। (२)

---

(१) एष भर्त्ता, तदुपसर्पतु आर्य्यः।

(२) प्रणमत चरणे इन्द्रस्य इन्द्रजालिकेति लब्धनाम्नः।

तथैव अद्य सम्बरस्य विवरस्य सुपरिस्थितयशसः।

देव किं

धरण्यां मृगाङ्कः, आकाशे महीधरो, जले ज्वलनः,

मध्याह्ने प्रदोषस्तावत् सिध्यतु, देहि आज्ञप्तिं।

विदू। भो वअस्स, अवहिदो होहि; भो, ईदिसो से अवट्ठम्भो जेण एव्वं सम्भावीअदि। (१)

ऐन्द्र। देव, किं जप्पिदेण बहुणा, जं जं हिअएण महसि पेक्खिदुं, तं तं दावेमि अहं, गुरुणो मन्तप्पहावेण। (२)

राजा। भद्रे, उत्थायं देवी, युष्मदीय एवायमैन्द्रजालिकः, विजनी कृतस्थायमुद्देशः; तदागच्छ, सहितावेवैनं पश्यावः।

चेटी। जं भट्टा आणवेदित्ति॥ निष्क्रम्य वासवदत्तया सह प्रविशति॥

वास। कंचणमाले, उज्जइणीदो आअदोत्ति, अत्थि मे तस्सिं इन्द जालिए पक्खवादो। (३)

काञ्च। णादिउलबहुमाणो क्खु एसो देवीए, ता एदु भट्टिणी। (४)

॥ इति परिक्रामतः॥

काञ्च। भट्टिणि, एसो भट्टा, ता उपसप्पदु देवी। (५)

वास॥ उपसृत्य॥ जेदु जेदु अज्जउत्तो।

राजा। देवि, बहुतरमनेन गर्जितं, तदिहस्थावेवैनं पश्यावः।

---

(१) भो वयस्य, सावधानो भव; भोः, ईदृशो ऽवष्टम्भो येनैवं सम्भाव्यते।

(२) किं जल्पितेन बहुना, यद्यत् हृदयेन वाञ्छसि प्रेक्षितुं, तं तं दर्शयामि अहं, गुरोर्मन्त्रप्रभावेण।

(३) काञ्चनमाले, उज्जयिनीत आगत इति, अस्ति मे तस्मिन्निन्द्र जालिके पक्षपातः।

(४) ज्ञातिकुलबहुमानः खलु एष देव्याः, तदागच्छतु भर्त्री।

(५) भर्त्रि, एष भर्त्ता, तदुपसर्पतु देवी।

वास ॥ उपविशति ॥

राजा। भद्र, प्रस्तूयतां बहुविधमिन्द्रजालं।

ऐन्द्र। जं देवो आणवेदित्ति ॥ बहुविधं नाट्यं कृत्वा पिच्छिकां भ्रमयन्॥ हरिहरब्बह्मप्पमुहे देवा, दावेमि, देवराअं च।

गअणम्मि सिद्धचारणसुरबहुसत्थञ्च णचन्तं। (१)

॥ सर्व्वे सविस्मयं पश्यन्ति ॥

राजा ॥ ऊर्द्ध्वं दृष्ट्वा आसनादवतरन्॥ आश्चर्य्यमाश्चर्य्यं।

विदू। अच्चरीअं अच्चरीअं।

वास। अच्चरीअं अच्चरीअं।

राजा। देवि, पश्य,

एष ब्रह्मा सरोजे, रजनिकरकलाशेखरः शङ्करोऽयं,
दोर्भिर्दैत्यान्तकोऽसौ सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः;
एषोऽप्यैरावतस्थस्त्रिदशपतिरमी, देवि, देवास्तथान्ये,
नृत्यन्ति व्योम्नि चैताश्चलचरणरणन्नूपुरा दिव्यनार्य्यः।

वास। अच्चरीअं अच्चरीअं।

---

(१) हरिहरब्रह्मप्रमुखान् देवान्, दर्शयामि, देवराजञ्च,
गगणे सिद्धचारणसुरवधूसार्थञ्च नृत्यन्तं।

विदू ॥ अपवार्य्य ॥ हा दासीए उत्त, इन्दआलिअ, किं एदेहिं देवेहिं, अच्छराहिं च दंसिदाहिं ; जइ दे इमिणा परितुट्ठेण कज्जं, ता दंसेहि साअरिअं । (१)

॥ ततः प्रविशति वसुन्धरा ॥

वसुं । जेदु जेदु भट्टा ; अमच्चजोअन्धराअणो विण्णवेदि ; एसो क्खु विक्कमबाहुणा कञ्चुइणा सह अणुप्पेसिदो वसुभूदी ता अरिहदि ; देवो इमस्सिं एव्व सुन्दरमुहुत्तए पेक्खिदुं ; अहंपि कज्जसेसं समाविअ, आअदोज्जेव्व । (२)

वास । अज्जउत्त, चिट्ठदु दाव पेक्खणअं ; माउलकुलादो अज्जप्पधाणो अमच्चवसुभूदि आअदो, ता एदं दाव पेक्खदु अज्जउत्तो । (३)

---

(१) हा दासीपुत्र, ऐन्द्रजालिक, किमेतैर्देवैरप्सरोभिश्च दर्शिताभिः ; यदि अमुना परितुष्टेन कार्य्यं, तत् दर्शय सागरिकां ।

(२) जयतु जयतु भर्त्ता ; अमात्ययोगन्धरायणो विज्ञापयति ; एष खलु विक्रमबाहुना कञ्चुकिना सह अनुप्रेषितो वसुभूतिः ; तदर्हति देवोऽस्मिन्नेव सुन्दरमुहूर्त्ते प्रेक्षितुं ; अहमपि कार्य्यशेषं समाप्यागत एव ।

(३) आर्य्यपुत्र, तिष्ठतु तावत् प्रेक्षणकं ; मातुलगृहादार्य्यप्रधानोऽमात्यवसुभूतिरागतस्तदिमं तावत् प्रेक्षतामार्य्यपुत्रः ।

राजा। यथाह देवी ॥ ऐन्द्रजालिकं प्रति ॥ भद्र, विश्रम्यतामिदानीं।

ऐन्द्र॥ पुनः पिञ्छिकां भ्रमयति॥ जं देवी आणवेदित्ति॥ निष्क्रामन्॥ मेएक्को उण खेडणओ, अवस्सं देवेण पेक्खिदव्वो। (१)

राजा। भद्र, द्रक्ष्यामः।

वास। कञ्चणमाले, देहि से पारितोसिअं। (२)

चेटी। जं देवी आणवेदित्ति॥ ऐन्द्रजालिकेन सह निष्क्रान्ता॥

राजा। वसन्तक, प्रत्युद्गम्य, प्रवेश्यतां वसुभूतिः।

विदू। जं भट्टा आणवेदित्ति॥ निष्क्रान्तः॥

ततः प्रविशति वसन्तकेन सह वसुभूतिः बाभ्रव्यश्च।

विदू। एदु एदु अमच्चो।

वसु॥ समन्तादवलोक्य॥ अहो वत्सेश्वरस्य भवनद्वारभावः। इह हि,

आचिन्वो जयकुञ्जरेण, तुरगांस्तिर्य्यक् नयन् वल्लभान्,
सङ्गीतध्वनिना हृतः चितिभृतां गोष्ठीषु तिष्ठन् क्षणं,
सद्योविस्मितसिंहलेन्द्रविभवः, क्वाप्रदेशेऽप्यहा
दास्येनैव कुतूहलेन महता, यौम्ध्या यथाहङ्कृतः।

---

(१) मयैकः पुनः खेलनको देवेनावश्यं प्रेक्षितव्यः।

(२) काञ्चनमाले, देह्यस्य पारितोषिकं।

वाभ्र । अद्य खलु चिरात् स्वामिनं द्रक्ष्यामीति, वत्सत्यमानन्दातिशयेन किमप्यवस्थान्तरमनुभवामि ; कुतः,

विदृद्धिं कम्पस्य प्रथयतितरां साध्वसवशा
दविस्पष्टां दृष्टिं तिरयति पुनर्व्वाष्पसलिलैः,
स्खलद्वर्णां वाणीं जडयतितरां गद्गदतया,
जरायाः साहाय्यं मम हि परितोषोऽद्य कुरुते ।

विदू ॥ अये भूत्वा ॥ एदु एदु अमच्चो ।

वसु ॥ विदूषकस्य कण्ठे रत्नमालां दृष्ट्वा, अपवार्य्य ॥ वाभ्रव्य, जाने ; सैवेयं रत्नमाला या देवेन राजपुत्र्यै प्रस्थानसमये दत्तेति ।

वाभ्र । अमात्य, अस्ति सादृश्यं ; तत्किं वसन्तकादवगच्छामि प्रभवमस्याः ।

वसु । वाभ्रव्य, मा मैवं ; महति राजकुले रत्नवाहुल्यान्न दुर्लभो भूषणानां सम्वादः इति ॥ परिक्रामन्ति ॥

विदू ॥ राजानमुद्दिश्य ॥ एसो वच्छाहिवो, ता उवसप्पदु अमच्चो (१) ।

वसु ॥ उपसृत्य ॥ जयतु जयतु देवः ।

राजा ॥ उत्थाय ॥ अभिवादये ।

वसु । श्रेयान्भूयाः ।

राजा । आसनमासनमार्य्याय ।

---

(१) एष वत्साधिपस्तदुपसर्पत्वमात्यः ।

विदू । भो,एदमासणं उपविसदु अमच्चो (१)॥इत्युत्तरीयं प्रयच्छति॥

वसु ॥ उपविशति ॥

कञ्चु । देव, बाभ्रव्यः प्रणमति ।

राजा ॥ पृष्ठे हस्तं दत्वा ॥ बाभ्रव्य, इत आस्यतां ।

कञ्चु ॥ उपविशति ॥

विदू । अमच्च एसा देवी वासवदत्ता पणमदि । (२)

वास । अज्ज पणमामि । (३)

वसु । आयुष्मती वत्सराजसदृशपुत्त्रमाप्नुहि ।

कञ्चुकी ॥ देवि, बाभ्रव्यः प्रणमति ।

राजा । आर्य्य वसुभूते, अपि कुशलं तत्रभवतः सिंहलेश्वरस्य ?

वसु॥ ऊर्ध्वमवलोक्य निश्वस्य च ॥ देव, न जाने, किं विज्ञापयामि मन्दभाग्यः ॥ अधोमुखस्तिष्ठति ॥

वास ॥ सविषादमात्मगतं ॥ हद्धी, हद्ध ; किं दाणिं वसुभूदी कधइस्सदि ? (४)

---

(१) भो इदमासनममात्योपविशत्वार्य्यः ।

(२) अमात्य, एषा देवी वासवदत्ता प्रणमति ।

(३) आर्य्य प्रणमामि ।

(४) हा धिक्, हा धिक् ; किमिदानीं वसुभूतिः कथयिष्यति ?

राजा ॥ वसुभूते, कथं पर्य्याकुल इवासि ?

वास ॥ अपवार्य्य ॥ चिरमपि स्थित्वा, यत्कथनीयं तदिदानीमेव कथ्यतां।

वसु ॥ सास्रं ॥ देव, न शक्यं निवेदयितुं तथापीव कथयामि; मन्दभाग्यः, यासौ तत्रभवतः सिंहलेश्वरस्य दुहिता, रत्नावली, नामायुष्मती, सिद्धादेशेनादिष्टा, योऽस्याः पाणिग्रहणं करिष्यति, स सार्व्वभौमो राजा भविष्यति, तत्प्रत्ययाद्योगन्धरायणेन बहुशः प्रार्थ्यमाना, सिंहलेश्वरेण वासव दत्तायाश्चित्तखेदं परिहरता, न दत्ता।

राजा ॥ अपवार्य्य ॥ देवि, किमिदमिदानीमलीकं त्वदीयमातुलामात्यः कथयति?

वास ॥ विस्मयं ॥ अय्यउत्त, अहंपि ण आणामि, को एत्थ अलिअं मन्तेदि ? ( १ )

विदू । ताए किं संवुत्तं । ( २ )

वसु । ततो, देवी दग्धेति वार्त्तामुत्पाद्य, देवाय प्रतिपादयितुमानीयमाना, समुद्रयानभङ्गादिति ॥ इदमधोमुखस्तिष्ठति ॥

---

( १ ) आर्य्यपुत्र, अहमपि न जानामि, कोऽत्रालीकं मन्त्रयति ?

( २ ) तस्याः किं सम्वृत्तं।

वास ॥ सास्रं ॥ हा हदाह्मि मन्दभाइणी, हा बहिणि रश्रणावलि, कहिं दाणिं सि, देहि मे पडिवश्रणं। (१)

राजा। समाश्वसिहि, समाश्वसिहि, दुःखग्रहा गतिर्दैवस्य; वाइन भङ्गपतितोत्थितो नन्वेतावन्निदर्शनमिति ॥ वसुभूतिबाभ्रव्यौ दर्शयति ॥

वास। अज्जउत्त, जुज्जदि एव्वं ; परं कुतो मम एत्तिश्रं भाअधेअं? (२)

॥ नेपथ्ये महान् कलकलः ॥

हर्म्याणां हेमशृङ्गश्रियमिव निचयैरर्चिषामादधानः,
सान्द्रोद्यानद्रुमाग्रग्लपनपिशुनितात्यन्ततीव्रप्रतापः,
कुर्वन् क्रीडामहीध्रं सजलजलधरश्यामलं धूमपातै
रेष क्लेशार्त्तयोषिज्जन इह सहसैवोत्थितोऽन्तःपुरेऽग्निः।

अपिच। देवीदाहप्रवादोऽयं योऽभूल्लावणके पुरा,
करिष्यन्निव तं सत्यमयमग्निः समुत्थितः।

राजा। कथं देवी वासवदत्ता दग्धा, हा प्रिये वासवदत्ते!

---

(१) हा हतास्मि, मन्दभागिनी; हा भगिनि, रत्नावलि, क्वेदानी मसि, देहि मे प्रतिवचनं,

(२) आर्य्यपुत्त्र, युज्यते एवं, परं कुतो मेमद्यं भागधेयं?

वास। अज्जउत्त, परित्ताहि, परित्ताहि।

राजा। अये, कथमतिसंभ्रमात्पार्श्वस्थापि देवी नोपलक्षिता॥ देव्याः पाणिं गृहीत्वा आलिङ्ग्य॥ देवि, समाश्वसिहि, समाश्वसिहि।

वास। अज्जउत्त, मए अत्तणो किदे ण भणिदं; किं उण, एसा क्खु मए णिग्घिणाए णिअडसंजमिदा साअरिआ विवज्जदि; ता परित्ता अदु अज्जउत्तो। (१)

राजा। कथं, देवि, सागरिका विपद्यते; एष गच्छामि।

वसु। देव, किमिदमकारणएव पतङ्गवृत्तिः क्रियते?

बाभ्र। देव युक्तमाह वसुभूतिः।

विदू॥ राजानमुत्तरीये गृहीत्वा॥ भो, मा क्खु साहसं करेहि। (२)

राजा॥ उत्तरीयमाकर्षन्॥ अरे धिङ्मूर्ख, सागरिका विपद्यते, किमद्यापि प्राणाः परिरक्ष्यन्ते?

बाभ्र। किमिदमवस्तुनि भरतकुलं संशयतुलायामारोप्यते। अथवा किमालापैर्भक्तिमदृशं करोमि।

राजा॥ धूमाभिभवं नाटयति॥

विरम, विरम, वह्ने, मुञ्च धूमाकुलत्वं,
प्रकटयसि किमुच्चैरर्चिषां चक्रवालं?

---

(१) आर्य्यपुत्त्र, मयात्मनः कृते न भणितं; किं पुनरेषा खलु मया निर्घृणया निगडसंयमिता सागरिका विपद्यते; तत्परित्रायतामार्य्यपुत्त्रः।

(२) भो, मा खलु साहसं कुरु।

विरहहुतभुजाहं यो न दग्धः प्रियायाः
प्रलयदहनभासा तस्य किं त्वं करोषि ?

कथमासन्नहुतवहा वर्त्तते सागरिका, तत् त्वरितमेनां सम्भावयामि ।

वास। कधं मम दुःखकारिणीए वअणादो एवंव्ववसिदं अज्ज उत्तेण, ता अहंपि अज्जउत्तं जेव्व अणुगमिस्सं। ( १ )

विदू ॥ परिक्रामन् अग्रतो भूत्वा॥ भोदि, अहंहि पधोवदेसको होमि[1] ( २ )

वस । कथं प्रविष्टएव ज्वलनं वत्सराजः; तन्ममापि दृष्टराजपुत्री विपत्तेर्युक्तमिहैवात्मानमाहुतीकर्त्तुं ।

कञ्चु ॥ सास्रं॥ हा महाराज, हा महाराज, किमिदमकारणमेव भरतकुलं संशयतुलामारोपितं, अथवा किं प्रलापेनाहमपि भक्तिसदृश माहरामि॥ इति सर्व्वे अग्निप्रवेशं नाटयन्ति॥

॥ ततः प्रविशति निगडसंयता सागरिका॥

साग। हद्धी, हद्धी; आः समन्तदो पज्जलिदो हुदवहो। अज्ज हुद वहो दिट्ठिआ करिस्सदि मे दुःखावसाणं। ( ३ )

---

( १ ) कथं मम दुःखकारिण्या वचनेन इदमध्यवसितं आर्य्यपुत्त्रेण; तदहमपि आर्य्यपुत्त्रमनुगमिष्यामि।

( २ ) भवति, अहं हि पथोपदेशको भवामि।

( ३ ) हा धिक्, हा धिक्, आः समन्तात् प्रज्वलितो हुतवहः। अद्य हुतवहो दिष्ट्या करिष्यति मे दुःखावसानं।

राजा । अये, इयमासन्नहुतवहा सागरिका वर्त्तते; तदुपसर्प्पामि; तत्त्वरितमेनां संभावयामि ॥ त्वरितमुपसृत्य ॥ अयि प्रिये, किमद्यापि मध्यस्थतया वर्त्तसे ।

साग ॥ राजानं दृष्ट्वा आत्मगतं ॥ कधं अज्जउत्तो; ता एदं पेक्खिअ पुणोवि मे जीविदासा समुत्पन्ना ॥ प्रकाशं ॥ भट्टा, परित्ताहि, परित्ताहि । (१)

राजा । भीरु, अलं भयेन । मुहूर्त्तमपि सह्यतां, वञ्चन एष धूमोद्गमः ॥ अग्रतोऽवलोक्य ॥ हहा धिगिदमंशुकं ज्वलति तत्स्तनप्रच्युतं ।

॥ विलोक्य ॥ मुञ्च: स्खलसि किं ॥ अवलोक्य ॥ कथंनिगडसंयतासि, द्रुतं ?

नयामि भवतीमहं, प्रियतमे, ऽवलम्बस्व मां ।

॥ कण्ठे गृहीत्वा निमीलिताक्षः स्पर्शसुखं नाटयन् ॥ अहो, क्षणादपगतोऽयं मे सन्तापः । प्रिये, समाश्वसिहि, समाश्वसिहि ।

व्यक्तं लग्नोऽपि भवतीं न धक्ष्यति हुताशनः,

यतः सन्तापमेवायं स्पर्शस्ते हरति प्रिये ।

॥ अक्षिणी समुन्मील्य निरीक्ष्य च ॥ अहो महदाश्चर्यं !

क्वासौ गतो हुतवहस्तदवस्थमेतदन्तःपुरं ॥ वासवदत्तां दृष्ट्वा ॥ कथमवन्तिनृपात्मजेयं ।

---

(१) कथमार्य्यपुत्त्रः; तस्मादेनं प्रेक्ष्य पुनरपि मे जीविताशा संवृत्ता । भर्त्तः, परित्रायस्व, परित्रायस्व ।

वास ॥ राज्ञः शरीरं प्रमृज्य सहर्षं ॥ दिट्ठिश्रा अक्खदशरीरो श्रज्ज उत्तो ।( १ )

राजा । वाभ्रव्य एषः ।

वाभ्र । विजयतां महाराजः । देव दिष्ट्या वर्द्धसे, पुनरुच्छ्रसिताः स्मः ।

राजा । वसुभूतिरयं ।

वसु । देव दिष्ट्या वर्द्धसे ।

राजा । वयस्य ।

विदू । भेदु भेदु भवं ।

राजा ॥ विचिन्त्य सवितर्कं ॥ स्वप्ने मतिर्भ्रमति, किंस्विदमिन्द्रजालं ?

विदू । भो मा सन्देहं करेहि; इन्दश्रालं क्खु एदं । भणिदं तेण दासीए उत्तेण इन्दश्रालिएण,जह अवस्सं एव्व देवेण एक्को मे खेडणश्रो दट्ठव्वोत्ति, ता तं जेव एदं ( २ )

राजा । देवि, इयमस्माभिरिहानीता त्वद्वचनात्सागरिका ।

वास ॥ विहस्य ॥ श्रज्जउत्त, जाणिदं दे सव्वं । ( ३ )

वसु ॥ सागरिकां दृष्ट्वा अपवार्य्य ॥ वाभ्रव्य, सदृशीयं राजपुत्त्र्याः ।

वाभ्र । अमात्य, ममाप्येतदेव मनसि वर्त्तते ।

वसु ॥ राजानमुद्दिश्य ॥ कुत इयं कन्यका ?

---

( १ ) दिष्ट्या अक्षतशरीर आर्य्यपुत्त्रः ।

( २ ) भो मा सन्देहं कुरु; इन्द्रजालं खल्विदं । भणितं तेन दास्याः पुत्त्रेण ऐन्द्रजालिकेन, यथा अवश्यमेव देवेन एको मे खेलनको द्रष्टव्य इति, तस्मात्तदेवेदं ।

( ३ ) आर्यपुत्त्र, ज्ञातं त्वया सर्व्वं ।

राजा। देवी जानाति।

वसु। देवि, कुतः पुनरियं कन्यका?

वास। अमच, एसा क्खु साअरदो पाविदेत्ति भणिअ, अमचजोअ न्धराअणेन मम हत्थे णिक्खित्ता; अदोएव्व साअरिअत्ति सद्दावीअदि। (१)

राजा ॥ स्वगतं ॥ कथं, यौगन्धरायणेन न्यस्ता? कथमसौ ममानिवेद्य किञ्चित्करिष्यति।

वसु ॥ अपवार्य ॥ बाभ्रव्य, यथा सुसदृशी वसन्तकस्य कण्ठे रत्नमाला, अस्याअपि सागरात्प्राप्तिः। तथा व्यक्तं, सिंहलेश्वरस्य दुहिता, रत्नावलीति ॥ उपसृत्य ॥ आयुष्मति, रत्नावलि, त्वमेतावतीमवस्थां गतासि।

साग ॥ दृष्ट्वा सास्रं ॥ कधममच्चो वसुभूदी? (२)

वसु। हा हतोऽस्मि मन्दभाग्य इति ॥ भूमौ पतति ॥

साग। हा हदह्मि, मन्दभाइणी; हा ताद, हा अम्ब, कहिं सि, देहि मे पडिवअणं ॥ (३) इत्यात्मानं पातयन्ती मोहमुपगता।

वास ॥ ससंभ्रमं ॥ कञ्चुइ, इयं सा मम बहिणिआ रअणावली? (४)

---

(१) अमात्य, एषा खलु सागरतः प्राप्ता, इति भणित्वा, अमात्य यौगन्धरायणेन मम हस्ते निक्षिप्ता, अतएव सागरिकेति मन्यते।

(२) कथममात्यो वसुभूतिः?

(३) हा हतास्मि, मन्दभागिनी; हा तात, हा अम्ब, कुत्रासि, देहि मे प्रतिवचनं।

(४) कञ्चुकिन्, इयं सा मम भगिनी रत्नावली?

कञ्च ॥ देवि इयमेव सा ।

वास ॥ रत्नावलीमालिङ्ग्य ॥ वहिणि, समस्सस, समस्सस । ( १ )

राजा । कथमुदात्तवंशप्रभवस्य विक्रमबाहोरात्मजेयं ।

विदू ॥ स्वगतं रत्नमालां दृष्ट्वा ॥ पढमे एव्व जाणिदं मए, णक्कु सामण्ण जणस्स इदिसो परिकदो होदित्ति । ( २ )

वसु ॥ उत्थाय ॥ राजपुत्ति, समाश्वसिहि, समाश्वसिहि । नन्वियं ज्यायसी भगिनी दुःखमास्ते ; तत्परिष्वजस्वैनां ।

रत्नावली ॥ समाश्वस्य,राजानं तिर्य्यगवलोक्य, स्वगतं ॥ कदावराधा क्खु अहं देवीए ण सक्कणोमि मुहं दंसिदुं । ( ३ ) ॥ इत्यधोमुखी तिष्ठति ॥

वास ॥ सास्रं वाहू प्रसार्य्य ॥ एहि अदिनिट्ठुरे, दाणिं पिअवहिणि एहि, सिणेहं दंसेहि इति ॥ कण्ठे गृह्णाति ॥ ( ४ )

॥ रत्नावली स्खलितं नाटयति ॥

वास ॥ अपवार्य्य ॥ अज्जउत्त, लज्जेमि अहं इमिणा अत्तणो णिसंसत्तणेण, ता लड्ड अपणेहि से एदं बन्धणं । ( ५ )

---

( १ ) भगिनि, समाश्वसिहि, समाश्वसिहि ।

( २ ) प्रथममेव ज्ञातं मया, नहि सामान्यजनस्येदृशः परिच्छदो भवतीति ।

( ३ ) कृतापराधा खल्वहं देव्या न शक्नोमि मुखं दर्शयितुं ।

( ४ ) एहि अतिनिष्ठुरा इदानीमसि, प्रियभगिनि, एहि, स्नेहं दर्शयेति ।

( ५ ) आर्य्यपुत्त्र, लज्जे अहममुना आत्मनो नृशंसत्वेन, तस्मात् लघु अपनयास्याबन्धनं ।

राजा ॥ सपरितोषं ॥ यथाह देवो ॥ तथा करोति ॥

वास । अमच, जोगन्धरामणेण एत्तिअं कालं दुज्जणीकदाह्मि, जेन जाणन्तेणवि ण मे णिवेदिदं । ( १ )

॥ ततः प्रविशति यौगन्धरायणः ॥

यौगं ।

देव्या मद्वचनात्यथामुपगतः पत्युर्व्वियोगे यथा,
सा देवस्य कलचताघटनया दुःखं मया स्थापिता ;
तस्याः प्रीतिमयं करिष्यति, जगत्स्वामित्वलाभः प्रभोः,
सत्यं दर्शयितुं तथापि वदनं शक्नोमि नो लज्जया ।

अथवा, किं क्रियते ईदृशमत्यन्तमाननीयेष्वपि निरनुरोधहृत्तिस्वामिभक्तिव्रतं ॥ निरूप्य ॥ अयं देवो महाराजः,यावदुपसर्प्पामि॥उपसृत्य॥ जयतु जयतु देवः, चम्यतां यन्मया अनिवेद्य कृतं ।

राजा । कथय किमनिवेद्य कृतं ?

यौग । करोत्वासनपरिग्रहं देवः, सर्व्वं विज्ञापयामि ।

॥ सर्व्वे उपविशन्ति॥

यौगं। देव श्रूयतां; येयं सिंहलेश्वरस्य दुहिता, सा सिद्धेनादिष्टा, यथा योऽस्याः पाणिग्रहणं करिष्यति, स सार्व्वभौमो राजा भविष्यति; ततस्तत्प्रत्ययादस्माभिः स्वामिनोऽर्थे बहुशः प्रार्थ्यमानेनापि, सिंहलेश्वरेण देव्या वासवदत्तायाश्चित्तखेदं परिहरता यदा, न दत्ता ।

---

( १ ) अमात्ययौगन्धरायणेनैतावन्तं कालं दुर्जनीकृतास्मि, येन जानतापि न मे निवेदितं ।

राजा । तदा किं?

यौगं । तदा लावणिकेन देवी दग्धेति प्रसिद्धिमुत्पाद्य, तदन्तिकं वाभ्रव्योऽपि प्रहितः ।

राजा । यौगन्धरायण, अतः परं श्रुतं मया, यथा देवीहस्ते किमप्यनुचिन्त्य स्थापिता ।

विदू ॥ अपवार्य्य ॥ भो, एदस्स अभिप्पाओ मए जाणिदो, अणाचक्खिदं एदं जाणीअदि एव्व, जह अन्तेउरगदं एदं जाव अन्तेउरगदो देवो सुहेण दंसइस्सदित्ति । (१)

राजा । गृहीतस्ते यौगन्धरायणाभिप्रायो वसन्तकेन ।

यौगं । यदाज्ञापयति देवः ।

राजा । ऐन्द्रजालिकवृत्तान्तोऽपि मन्ये तत्प्रयोग एव ।

यौगं । अन्यथा अन्तःपुरे बद्धाया अस्याः कुतो देवेन दर्शनं? अदृष्टायाश्च वसुभूतिना कुतः परिज्ञानं?

राजा ॥ विहस्य ॥ परिज्ञातायाश्च भगिन्याः सम्प्रति यथा करणीयं, तथा देवी प्रमाणं ।

वास । अज्जउत्त, फुडं एव्व किं ण भणासि, जह पडिवादेहि मए रअणावलिंत्ति । (२)

---

(१) भो एतस्याभिप्रायो मया ज्ञातः, अनाख्यातमपि इदं ज्ञायते एव, यथान्तःपुरगतामेतामन्तःपुरगतो देवः सुखेन द्रक्ष्यतीति ।

(२) आर्य्यपुत्त, स्फुटमेव किं न भणसि, यथा प्रतिपादय मह्यं रत्नावलीमिति ॥

विदू॥ भोदि, सुट्ठु तुए जाणिदो अमच्चस्स अभिप्पाओ। (१)

वास॥ एहि रअणावलि, एहि; दाणिं किम्पि दे मे वहिणिआ अणुरूवं होदु। (२) इति रत्नावलीं स्वकीयैराभरणैरलङ्कृत्य, हस्ते गृहीत्वा, राजानमुपसृत्य॥ अज्जउत्त, एदं रअणावलिं पडिच्छ। (३)

राजा॥ सहर्षं हस्तौ प्रसार्य्य॥ को देव्याः प्रसादो न बहु मन्यते॥ इति सागरिकां गृह्णाति॥

वास॥ अज्जउत्त, दूरे क्खु एदाए णादिउलं, ता तह करेदु, जह बन्धु जणं ण सुमरेदि। (४) इति समर्पयति॥

राजा। यथाज्ञापयति देवी।

विदू॥ सहर्षं नृत्यति॥ हीही भो, जअदु जअदु भवं; पुहवी क्खु दाणि हत्थगदा पिअवअस्सस्स (५)

---

(१) भवति, सुष्ठु त्वया ज्ञातोऽमात्यस्याभिप्रायः।

(२) एहि रत्नावलि, एहि; किमपि ते मे भगिन्या अनुरूपं भवतु।

(३) आर्य्यपुत्त्र, इमां रत्नावलीं प्रतीच्छ।

(४) आर्य्यपुत्त्र, दूरे खलु एतस्या ज्ञातिकुलं, तस्मात् तथा कुरु यथा बन्धुजनमेषा न स्मरति।

(५) जयतु जयतु भवान्; पृथिवी खल्विदानीं हस्तगता प्रियवयस्यस्य।

वसु॥ राजपुत्रि वासवदत्तां प्रणमेनामर्थ ॥ रत्नावली तथा करोति॥

वाभ्र। देवि, स्थाने देवीशब्दमुद्वहसि।

वास॥ रत्नावलीमालिङ्ग्य॥ देवीशब्देन प्रसादमकरोदिति।

राजा। इदानीं सफलपरिश्रमोऽस्मि संवृत्तः।

यौगं। देव किन्ते भूयः प्रियमुपकरोमि।

राजा॥ किमतः परमपि प्रियमस्ति; यतः,

नीतो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्व्वीतले,<br>
सारं सागरिका ससागरमहीप्राप्त्यैकहेतुः प्रिया;<br>
देवी प्रीतिमुपागता च भगिनीलाभाज्जिताः कोशलाः,<br>
किं नामास्ति विधेयमत्र भुवने यस्मिन् करोमि स्पृहां?

तथापीदमस्तु भरतवाक्यं।

उर्व्वीमुद्दामसस्यां जनयतु विसृजन्वासवो वृष्टिमिष्टा<br>
मिष्टैस्त्रैविष्टपानां विदधतु विधिवत्प्रीणनं विप्रमुख्याः;<br>
आकल्पान्तञ्च भूयात्समुपचितसुखस्सङ्गमः सज्जनानां,<br>
निःशेषा यान्तु शान्तिं पिशुनजनगिरो दुर्जया वज्रलेपाः।

इति निष्क्रान्ताः सर्व्वे।

इति श्रीहर्षदेवस्य कृतिरियं रत्नावली समाप्ता।

---